॥ अर्हं ॥

## ॥ समयसारप्रकरणस्य प्रस्तावना ॥

एतस्मिन् खलु विशालेऽपि सङ्कटे सरसेऽपि नीरसे स्थिरेऽपि चले समारेऽपि निस्सारे संयोगशालिन्यपि वियोगव्याकुले संसारपथे परिभ्रमतां प्राणभृतां विविधविपाकोन्मुखकर्ममहिम्ना अपरिमेया: प्रवृत्तयोऽनुभवमार्गमुपयान्ति। ताश्च प्रत्येकमशक्यज्ञाना असर्वविदा जनेनेति संक्षिप्य चतुर्धा धर्मार्थकाममोक्षविषयत्वेन विभाजिताः शास्त्रदृग्भिः। तत्र चिरार्जिततथाविधकर्मवासनाप्रेरिता एव प्राणिनः प्रारम्भमात्रसरसाय कटुकफलायावर्जनीयवैराय कामायानुपदिष्टा एव स्पृहयालवस्तत्साधनसम्पादनाय बद्धावेशा रात्रिंदिवं प्रयतमाना दृश्यन्ते। कामपुरुषार्थपरायणा अर्थप्राप्तिमन्तरेण न यथाव्यक्तकृत्या इति तत्सामर्थ्याय स्थावरजङ्गमात्मकायास्वभावभूतायापि प्रवृत्तिरनिवारितप्रसरैव। पौद्गलिकापौद्गलिकत्वेन द्विविधस्य धर्मस्य मध्ये दानादिरूपः पौद्गलिको धर्मो मुखनिक्षिप्तस्वादिष्टशर्कराकल्पत्वेन सुवर्णनिगडानुकारित्वेन च भक्तमात्रत्वात् शाश्वतिकसुखप्रतिबन्धकत्वाचोच्चभूमिकामाश्रितवतामध्यात्मदृशां पारमार्थिकसुखतृष्णोपशमाय नालम्भूष्णुः, तदितरस्तु सर्वपुरुषार्थमूर्धाभिषिक्ते तुरीये मोक्ष एवान्तर्भवति। मोक्षस्तु स्वतन्त्रतायाः परा भूमिः, समस्तात्मनश्चिद्रूपस्य चरमं स्थानं, पुद्गलनिरपेक्षानवच्छिन्नसुखोर्मिणामतलस्पर्शस्सागरः, कैश्चिदेव प्रातःस्मरणीयनामधेयैर्धन्यभागधेयैर्महामहिमभिः प्राप्यते। घातयी तत्प्रेप्सापि न दुर्भेदमोहनीयकर्मतथाविधलाघवमन्तरेति मोक्षरुचेर्महाप्रयत्नसाध्यत्वं

निष्पत्तायाथ महाप्रयत्नस्यास्य विचारशीलानां बुद्धिगम्यमेव । ये च समुपजातमोक्षरुचयो विदितयथावत्तत्प्रतिबन्धकतदुपायमार्गास्ते स्वीयं स्पृहणीयं ज्ञानमन्येषु भव्याङ्गिषु सङ्क्रमयितुं तत्तत्तत्त्वं चिख्यापयिषन्त्येव । श्रावणेन ख्यापितं तत्तत्त्वं केषुचिदेव तत्कालवर्तिषु पुरस्तादुपस्थितेषु कदाचिदुपकारपदं स्यात्, वर्त्तमानभविष्यत्कालवर्त्तिनां सर्वेषामपि जिज्ञासूनां तु परितोषपोषाय ग्रन्थसन्दर्भमेव प्रभवति, इतिविचारभाजो वर्त्तमानशासनसूत्रधारमहावीरपदानुगाः कतिचिन्महर्षिगणधरा यथा मोक्षोपायभूतसम्यग्दर्शनज्ञानचारित्ररूपरत्नत्रयनिरूपणेन स्वामसाधारणीं लोकहितैषितां प्रादुरकार्षुः, तथा धीमन्तस्तत्रभवन्तो देवानन्दाचार्या अपि प्रस्तुतायाः समयसाराभिधानायाः कृतेः सम्यक्प्रणयनेन लोकान् सुचिरमनुजगृहुः ।

अस्याश्च मूलं गद्यसूत्रात्मकमतिविशदार्द्धमागधीभाषामयं च । अयं च विशेषो यस्याः कृतेरुपादेयतां पुष्णाति यदुतेदानीं यावदुपलभ्यमानेषु केष्वपि प्राकरणिकग्रन्थेषु प्रायोऽदृष्टचरं गद्यात्मकमूलकत्वं वर्त्तते । मूलीयभाषाया अर्द्धमागधीत्वं ग्रन्थकारोक्त्या तल्लक्षणावेक्षणेन चैवनिर्णयम् । मूलस्य सूत्रात्मकत्वेन सूत्राणां च सूचनमात्रकारित्वेनातिविशदत्वेऽपि प्रतिविषयं गम्भीरविशालाशयः तच्छङ्कासमाधान-मतान्तरादिकं च सर्वैर्दुरवबोधं स्यादित्याकलय्य मूलकारैरेव संस्कृतभाषाभूषणभूता टीका निरमायि । टीकायाश्च भाषा सहृदयहृदयहारिणी प्रसन्ना च । लेखपद्धतिरपि प्राञ्जलत्वेन संसारीं यान् कांश्चिदपि साहित्यरसप्रेम्णः सकृदवलोकनाय तून्मुखीकरिष्यत्येव ।

एतस्मिंश्च हृदयनिषेधे प्रकरणरत्ने दशाध्याया उपन्यासिसत । तत्र जीवतत्त्वस्वरूपनिरूपणनाम्नि प्रथमेऽध्याये—मङ्गलपूर्वकपुरस्सरं मोक्षस्य पुरुषार्थान्तरेभ्यः प्राधान्यव्यवस्थापनम्, तदुपायत्वेन सम्यग्ज्ञानादिरत्नत्रयस्य निदर्शनम्,

सम्यग्ज्ञानस्य लक्षणम्, तल्लक्षणकुक्षिप्रविष्टतत्त्वस्य सप्तधा विभज्य नामनिर्देशः, जीवस्य सिद्धसंसारिभेदेन द्वैविध्यम्, सिद्धस्य लक्षणं भेदाश्च, संसारिण एकादिचतुर्दशान्ता यथासंभवं विविधकल्पनया भेदाः, तत्र गुणस्थानवर्णनेन चतुर्दशधाविभागप्रस्तावे टीकायां नातिसंक्षिप्तं हृदयहारि गुणस्थानस्वरूपनिरूपणम्, भवस्थित्यवगाहना-कायस्थिति-प्राण-पर्याप्ति-लेश्यादीनां दिग्दर्शनम्, गुणस्थानस्थितिप्ररूपणं च;

अजीवतत्त्वप्रतिपादके द्वितीये—अजीवविभागः, षण्णां द्रव्याणां सामान्यलक्षणम्, कालेन पुद्गलेन जीवेन च वर्तितानां पञ्चानां साधर्म्यम्, षण्णां द्रव्याणां विशिष्य लक्षणानि, विशिष्य पुद्गलस्वरूपम्, जीवान् प्रति पौद्गलिकोपग्रहदर्शनम्, षण्णामपि द्रव्याणां द्रव्यतः प्रदेशतश्च सत्स्थानमवगाहनायाः प्रमाणं च, अजीवप्रतिभेदोपदर्शनं च;

आस्रवतत्त्वनिरूपके तृतीये—आस्रवस्य लक्षणम्, तद्भेदानां सत्ताय पृथक्पृथक् स्वरूपदर्शनम्, ज्ञानावरणादित्तत्कर्मनिश्रया विशेषेणास्रवाणां निरूपणम्, प्रतिगुणस्थानं बन्धमुद्दिश्य कर्मणां सत्तानं च;

बन्धतत्त्वप्रकाशके चतुर्थे—हेतुप्रदर्शनपुरस्सरं बन्धलक्षणम्, तद्भेदानां प्रकृत्यादीनां सत्ताय प्रतिनियतस्वरूपप्रकटनम्, जीवोपादीयमानकर्मवर्गणास्कन्धस्वरूपनिदर्शनम्, गृहीतदलिकस्याष्टधाविभागोपपत्तिपूर्वकं जीवसंबन्धप्रकारणम्, प्रकृत्यादीनां चतुर्णां बन्धानां प्रधानीभूतहेतुप्रख्यापनम्, स्पृष्टादिप्रकारान्तरैर्बन्धस्य चातुर्विध्योपक्षेपश्च;

संवरतत्त्वप्रपञ्चके पञ्चमे—संवरलक्षणम्, तद्भेदानां समोल्लापनम्, ईर्यासमित्यादीनां पृथक्पृथक् स्वरूपनिरूपणं च;

निर्जरातत्त्वप्रख्यापके षष्ठे—निर्जराया लक्षणम्, तस्याः सकामादिभेदद्वयोपदर्शनम्, तत्राकामायाश्चतसृषु गतिषु

व्यस्त्या प्रकटनम्, सकामाया भेदोपदर्शनपूर्वकं स्वरूपशंसनं च;

मोक्षतत्त्वप्रबोधके सप्तमे—मोक्षलक्षणम्, कृत्स्नकर्मक्षयकारिणां देहत्यागेऽधोभूम्यादिगमनं कथं न ? इत्याशङ्कानिरसनम्, तेषामूर्ध्वगमने युक्त्युपदर्शनपुरस्सरं लोकान्तस्थायित्वकथनम्, अलोकागमने हेतूपदर्शनम्, मोक्षसुखस्य निरौपम्यादिदर्शनम्, सिद्धप्ररूपणाया भेदोद्भावनं च;

सम्यग्ज्ञानदर्शनावबोधकेऽष्टमे—अनन्तरोदिततत्त्वानां सङ्क्षान्तरशंसनम्, तदवबोधे सम्यग्ज्ञानं भवतीति प्रदर्श्य तद्भेदोपपादनम्, तत्त्वश्रद्धानस्य सम्यग्दर्शनत्वम्, तस्य पुनः सम्यग्ज्ञानहेतुत्वम्, उत्पत्तिनिमित्तमपेक्ष्य द्वैविध्यमौपशमिकत्वादिना त्रैविध्यं च, तदीयानां भेदानां विशिष्य स्वरूपव्यावर्णनम्, प्रतिगति संभवद्भेदप्रादुर्भावनं च;

सम्यक्चारित्रस्वरूपाविर्भावके नवमे—चारित्रलक्षणम्, तद्द्विविध्यम्, सर्वचारित्रस्य स्वरूपभेदादिविचारणम्, देशचारित्रलक्षणभेदादेरपि संदर्शनम्, यावद्यावत्कर्मस्थित्यवशेषे सम्यग्दर्शनदेशचारित्रादि प्राप्यते तत्प्रदर्शनं च;

आराधनाविराधनाफलव्यवस्थापके दशमे च—सम्यग्ज्ञानादित्रयस्य लोकख्यातां रत्नत्रयसंज्ञां निगद्य तत्सामस्त्येनैव मुक्त्यवाप्तेः सयुक्तिकं व्यवस्थापनम्, तद्व्यस्तत्वे चैकैकस्य फलवन्ध्यत्वमावेदयितुं रुच्ययुक्त्युपन्यासः, तदाराधनाविराधनयोः फलस्य विस्पष्टीकरणम्, कर्तव्योपनिपदुपदर्शनपूर्वभाविनिगमनं च, प्रत्यध्यायमावेदिता एते विषयाः प्राधान्येन विवेचिताः सन्ति । अवान्तरास्तु परेऽप्यनेके विषयाः रोचकपद्धत्या यथोपयं प्रायेणार्पिता ग्रन्थकृद्भिरिति सङ्क्षेपतः

सटीकैतद्ग्रन्थस्योपनिबन्धकाः ; नामधेयाः क ममाय चर : र साधकयामासुः र ...

तट्टीकाप्रान्तप्रवेशितप्रशस्तिपद्येषु—

"लोआण देवचंद य, हिया पउमप्पहा जिणेसपया । देवाणंदप्पमुहाइहेऊ सययं मिवं दिन्तु ॥ १ ॥

श्रीपद्मप्रभगणधरपदद्वन्द्वराजहंस इमाम् । देवानन्दो व्यतनुत, टीकां स्वोपज्ञममग्मारस्य ॥ २ ॥

निधिरसयुगशशि १४६९ सङ्ख्ये, वर्षे विक्रमनृपात्सहसि मासे । शुक्ले त्रयोदशतिथौ, सौम्यदिनेऽपूरि टीकेयम् ॥ ३ ॥"

इत्येतावत्पद्यदर्शनेन श्रीमत्पद्मप्रभसूरिशिष्याः श्रीमन्तो देवानन्दाचार्या विक्रमार्कीयैकोनसप्ततत्युत्तरचतुर्दशशततमे संवत्सरे ग्रन्थमिमं निर्मामिपुरिति निर्णयात्परिशाम्यति ।

कं प्रदेशं कां च जातिं कौ च पितरौ कं च गच्छं स्वजन्मस्थित्यादिमहिम्ना पवित्रयां बभूवुरिति अद्यावधि कश्चिदपि तथाविधोल्लेखस्य दृष्टिपथमनवतीर्णत्वेन न निर्णेतुं प्रभवामः ।

सत्यपि भूयस्सु विशकलितसमूहितभावेन प्रस्तुतविषयप्रतिपादकेषु ग्रन्थरत्नेषु नास्योपयोगिता लेशतोऽपि हीयते, यतोऽस्मिन् निबन्धमणौ लेश्या–सांव्यवहारिकाऽ–सांव्यवहारिकत्व–गुणस्थान–पुद्गलीयभेदप्रभेद–अल्पबहुत्व–अष्टविधवर्गणा–सदृष्टान्तशुभाशुभरसप्रदर्शनपूर्वक–चतुश्चतुर्विधबन्ध–परीषह–क्षायिकादिसम्यग्दर्शनभेदादीनां स्वरूपं संक्षिप्य परन्तु व्युत्पित्सूनामवश्यावधारणीयत्वेनाकरग्रन्थेभ्यः संगृह्यातिविशदतया प्रापञ्चि ।

अस्य संशोधनावसरेऽणहिलपुरपत्तनसङ्घाधिकृतपुस्तककोशीयं प्रथमं शुद्धतरं जीर्णप्रायमेकोनचत्वारिंशत्पत्रकं प्रायो

ग्रन्थकारस्वहस्तलिखितप्रथमादर्शकल्पम्, द्वितीयं पुनः शुद्धं खण्डीभूतपत्रकं द्विचत्वारिंशद्दलम्, तृतीयं पाणहिल्लपुरपत्तनीयवाडीपार्श्वनाथमन्दिरस्थज्ञानकोशगतं शुद्धतमं सम्यगवस्थं पञ्चत्रिंशत्पत्रभागि पुस्तकमिति त्रीणि पुस्तकानि समुपालप्सत ।

अस्य च मुद्रणे न्यायाम्भोनिधिप्रतिभाप्रतिकृतिश्रीमद्विजयानन्दसूरीश्वरप्रशिष्यश्रीहंसविजयपदकजरोलम्बायमानश्रीकेसरविजयोपदिष्ट-मांगरोल-वास्तव्यविद्याप्रियोत्साहवच्छ्रीमाळिज्ञातीयश्रेष्ठि-देवचन्द्रात्मजन्मना-मौक्तिकचन्द्रेण-परिपूर्णं मुद्राविषयं साहाय्यमकारि ।

अस्य ग्रन्थस्य साद्यन्तपरिशोधनं महतायासेन विहितवतः श्रीमत्पूज्यपादशान्तमुद्राप्रवर्त्तककान्तिविजयशिष्यश्रीमदात्मारामजीनपुरस्संशोधनदत्तचित्तचतुरविजयमुनीन् कृतज्ञताप्रकाशनपुरस्सरं धन्यवादयामः, न च तेषां पुण्यं नाम कदाचिदपि स्मृतिपथादवतारयितुं शक्ष्यामः ।

यद्यपि संशोधनं सावधानमकारि तथापि छद्मस्थभावसहजविस्मृतिदोषेण वर्णयोजकदोषेण वा काप्यवशिष्यमाणाऽशुद्धिर्यदि दृष्टिगोचरीभवेत्तर्हि संशोध्य वाचनीयं सूचनीयं च, यतो द्वितीयस्यामावृत्तौ तद्दूषणं निराकर्त्तुं प्रयतेमहि इत्याशास्ते—

भावनगरस्था श्रीजैनआत्मानन्दसभा.

॥ अर्हं ॥

श्रीमद्विजयानन्दसूरिसूरेभ्यो नमः ।

श्रीमद्देवानन्दसूरिविरचितस्वोपज्ञटीकासमलङ्कृतं

# समयसारप्रकरणम् ।

नत्वाऽर्हतः समस्तान्, मिथ्याज्ञानान्धतमसदिवसकरान् । स्वोपज्ञसमयसारे, कुर्वे संक्षेपतष्टीकाम् ॥ १ ॥

तस्य चार्द्धमागधभाषानिबद्धस्यादौ षट् श्लोकाः, ततो गद्यावलीरूपं सूत्रम् , तत्राद्यः श्लोको यथा—

सव्वण्णू मोक्खमक्खंति, चउव्वग्गंमि उत्तमं । सुत्तं जओ तियग्गम्मि, दिट्ठमेगंतिअं न हु ॥ १ ॥

ननु शिष्टाः सर्वत्र शास्त्रारम्भे मङ्गलार्थमिष्टदेवतास्तवं प्रेक्षावतां प्रवृत्तये चाभिधेयसम्बन्धप्रयोजनान्युपन्यस्यन्ति, तत्किमितीह न तदुपन्यासः कृतः ?, उच्यते, कृत एव । तथाहि—सर्वज्ञा इति पदं भक्तिसम्भ्रमात्समस्तपदानामादावुपन्यस्तं देवतास्तवं व्यनक्ति । चतुर्वर्गे उत्तमं मोक्षमाख्यान्तीत्यनेन मोक्षशास्त्रलक्षणस्याभिधेयस्याक्षेपः । प्रयोजनसंबन्धौ तु सामर्थ्यगम्यौ । तत्र कर्तुरनन्तरं प्रयोजनं सततं चेतसः श्रीसर्वज्ञोक्ततत्त्वचिन्तनप्रवृत्तेर्धर्मध्यानावाप्तिः सत्त्वानुग्रहश्च । श्रोतुर्मोक्षोपायपरिज्ञानम् । परम्परं तु द्वयोरपि निःश्रेयसावाप्तिः । सम्बन्धस्तूपायोपेयलक्षणो गुरुपर्वक्रमलक्षणो वा ।

१० गुरु० ३ १,

लसत्सुखलेशस्य पर्यन्तविरसस्य च कामस्य प्रशंसा का युक्ता ? 'दुर्गतिहेतोः' दुर्गतिकारणस्य ॥ ४ ॥

इति त्रिवर्गं निरस्य मोक्षस्यैव प्रशस्यतामाह—

तम्हाऽणंतसुहं खीण-समग्गदुहसंतई । मोक्खं चिअ पसंसंति, जरामरणवज्जिअं ॥ ५ ॥

यस्मादेवं तस्मादनन्तसुखं क्षीणसमग्रदुःखसन्ततिं जरामरणवर्जितं मोक्षमेव प्रशंसन्ति बुधा इति गम्यते ॥ ५ ॥

सम्प्रति तत्प्राप्त्युपायं प्रकटयन्नाह—

लहंति तं पुणो सम्म-णाणदिट्ठिचरित्ताओ । आराहिआउ काऊण, सव्वकम्मक्खयं जिआ ॥ ६ ॥ मोक्षं-

पुनःशब्दो वाक्यभेदे 'सम्यग्ज्ञानदृष्टिचरित्रतः' इति समाहारैकत्वं पञ्चम्यालयप्। सम्यगित्यस्य प्रत्येकं संबन्धः । सम्यगिति नयविपर्ययनिवृत्त्यर्थं ज्ञानस्य मिथ्याप्रतिपत्तिनिवृत्त्यर्थं दर्शनस्य अज्ञानपूर्वकाचरणनिवृत्त्यर्थं च चारित्रस्य विशेषणम्। ततश्च सम्यग्ज्ञानात्सम्यग्दर्शनात्सम्यक्चारित्राच्च 'आराधितात्' विधिनाऽऽसेविताद्धेतोः सर्वकर्मक्षयं कृत्वा जीवाः 'तं' मोक्षं लभन्ते ॥ ६ ॥ तत्रादौ सम्यग्ज्ञानस्वरूपप्ररूपणाय सूत्रमाह—तत्थ सम्मगुपरूविआणं जहट्ठिआणं तत्ताणं जे अवबोहे तं सम्मन्नाणंति भण्णइ ॥ 'तत्र' इति तेषु सम्यग्ज्ञानादिषु मध्ये सम्यग्ज्ञानं प्ररूप्यते—सर्वज्ञप्ररूपितानां 'यथास्थितानां' नयप्रमाणप्रतिष्ठितस्वरूपाणां 'तत्त्वानां' जीवाजीवादीनां योऽवबोधस्तत्सम्यग्ज्ञानमिति भण्यते । इह

च 'ऐ अवधोहे' इत्यत्रैकारः 'अत एत्सौ पुंसि मागध्याम्' (सि० ८-४- २८७) इति लक्षणेन ज्ञेयः । अर्द्धमागधभाषाया अभिमतत्वेनैतावतो मागधीलक्षणस्यात्रादृतत्वात्। एवमग्रेपि॥ अथ तत्त्वानि कानि? इति शिष्यप्रश्नमाशङ्क्य तन्नामान्याह-तत्ताणि पुण सत्त पण्णत्ताणि। तंजहा—जीवा अजीवा आसवे बंधे संवरे निज्जरा मोक्खे अ ॥ तत्त्वानि पुनः सप्त 'प्रज्ञप्तानि' प्ररूपितानि तीर्थकरगणधरैरिति गम्यते । अथवा प्राज्ञात्तीर्थकरादाप्तानि प्राप्तानि गणधरैरिति प्राज्ञाप्तानि । अथवा प्राज्ञैर्गणधरैस्तीर्थकरादाप्तानि गृहीतानि प्राज्ञाप्तानि । प्रज्ञया वा भव्यजन्तुभिराप्तानि प्राप्तानि प्रज्ञाप्तानि । न हि प्रज्ञाविकलैरिमानि प्राप्यन्त इति प्रतीतमेव । ह्रस्वत्वं तु सर्वत्र प्राकृतत्वात् । 'तद्यथा' इति तदुपन्यासार्थः । 'जीवाः' सुखदुःखोपयोगलक्षणाः । 'अजीवाः' तद्विपरीताः । आस्रवत्यागच्छति कर्मानेनेति 'आस्रवः' शुभाशुभकर्मोपादानहेतुर्हिंसादिः । 'बन्धः' जीवकर्मणोरत्यन्तसंश्लेषः । संवरणं 'संवरः' गुप्त्यादिभिरास्रवनिरोधः । निर्जरणं 'निर्जरा' विपाकात्तपसो वा कर्मणां देशतः क्षपणा । 'मोक्षः' कृत्स्नकर्मक्षयादात्मनः स्वात्मन्यवस्थानम् । चशब्दः समुच्चये ॥ अथैतेषामेवं क्रमोपन्यासे को हेतुः?, उच्यते, सर्वस्य फलस्यात्माधीनत्वादादौ जीवग्रहणम् । तदुपकारार्थत्वात्तदनन्तरमजीवाभिधानम् । तदुभयविषयत्वादनन्तरमास्रवोपादानम् । तत्पूर्वकत्वादनन्तरं बन्धग्रहणम्। संवृतस्य बन्धाभावात्तत्प्रत्यनीकतां प्रतिपत्तुं तदनन्तरं संवरवचनम् । संवरे सति निर्जरोपपत्तेस्तदन्तिके निर्जराग्रहणम् । अन्ते प्राप्यत्वान्मोक्षस्यान्ते वचनमिति । इह आस्रवबन्धौ मुख्यं संसारकारणमिति हेयौ । संवरनिर्जरे मुख्यं मोक्षकारणं, मोक्षस्तु मुख्यं साध्यमित्येतानि त्रीण्युपादेयानि । इत्येवं शिष्यस्य हेयोपादेयतापरिज्ञापनार्थं मध्यमप्रस्थानापेक्षया सप्तैरुपकम् ।

अन्यथा भक्षेपा क्षया : व ऽ: । ए

कथं जीवाऽजीवयोरेवान्येषामन्तर्भावः ?, उच्यते—आस्रवो मिथ्यादर्शनादिरूपः परिणामो जीवस्य, स चात्मानं पुद्गलांश्च मुक्त्वा कोऽन्यः ? । बन्धस्तु शुभाशुभकर्म्मपुद्गलैर्जीवप्रदेशानामेव क्षीरनीरवद्वह्न्ययःपिण्डवद्वाऽन्योऽन्यानुगमाभेदात्मकः संबन्धः, पुद्गलानां चाऽजीवत्वं प्रतीतम् । संवरोऽप्याश्रवनिरोधलक्षणो देशसर्वभेद आत्मनः परिणामो निवृत्तिरूपः । निर्जरा तु कर्म्मपरिशाटो जीवकर्मणो यत्पार्थक्यमापादयति स्वशक्त्या । मोक्षोऽपि कृत्स्नकर्म्मविरहित आत्मेति । अन्यत्र तु बन्धान्तर्भाविपुण्यपापपृथग्विवक्षया नवापि पदार्था उच्यन्ते । तथा पुरस्तात्—"एआणि सत्त तत्ताणि बंधंतब्भूआणं पुण्णपावाणं विभिन्नविवक्खाए नवावि भण्णंति" इति सूत्र एव वक्ष्यति ॥ अथ यथोद्देशं निर्देश इति जीवतत्त्वं प्रचिकटयिषुर्जीवान् विभजति—तत्थ जीवा दुविहा । तंजहा—सिद्धा संसारिणो अ ॥ स्पष्टम् । नवरं 'जीव प्राणधारणे' जीवन्ति जीविष्यन्ति जीवितवन्त इति जीवाः—"ज्ञानाद्या भावतः प्राणाः, द्रव्यतश्चेन्द्रियादयः । जीवाः स्युर्धारणात्तेषां, सिद्धाः संसारिणोऽपि च ॥ १ ॥" अथ प्रथमं सिद्धभेदानभिधित्सुराह—तत्थ सिद्धा अणंतनाणदंसणवीरिअसोक्खलक्खणएगसहावभावाओ एगविहावि अणंतरपच्छिमभवरूवोवाहिभेआओ पन्नरसविहा । तंजहा—तित्थसिद्धा १ अतित्थसिद्धा २ तित्थगरसिद्धा ३ अतित्थगरसिद्धा ४ सयंबुद्धसिद्धा ५ पत्तेअबुद्धसिद्धा ६ बुद्धबोहिअसिद्धा ७ इत्थिलिंगसिद्धा ८ पुरिसलिंगसिद्धा ९ नपुंसगलिंगसिद्धा १० सलिंगसिद्धा ११ अन्नलिंग-

... प्रतीतम्" इत्यपि पाठः ॥

सिद्धा १२ गिहिलिङ्गसिद्धा १३ एगसिद्धा १४ अणेगसिद्धा य १५॥ तत्रेति सिद्धसंसारिणोर्मध्ये सिद्धा व्याख्यायन्ते[1]—सिध्यन्ति स्म कृतकृत्या अभवन्, सेधन्ति स्म वाऽगच्छन्नपुनरावृत्त्या लोकाग्रमिति सिद्धाः। अथवा सितं बद्धं ध्मातं भस्मीकृतमष्टप्रकारं कर्म यैस्ते सिद्धाः, पृषोदरादित्वाद्रूपसिद्धिः। ते च सर्वेऽप्यविशेषेणानन्तज्ञानादिलक्षणैकस्वभावभाजाऽप्येकविधा अपि अनन्तरो मुक्तिगतेः प्राग्भवसहितो यः पश्चिमो भवस्तद्रूपो य उपाधिभेदो विशेषणप्रकारस्तस्मात्पञ्चदशविधाः। तद्यथा—तीर्थे चतुर्विधश्रमणसङ्घे उत्पन्ने सति ये सिद्धास्ते तीर्थसिद्धाः १। अतीर्थे तीर्थाऽभावे सुविध्यादितीर्थकृतां सप्तस्वन्तरेषु धर्मव्यवच्छेदे सति जातिस्मरणादिनाऽवाप्ताऽपवर्गमार्गाः सिद्धा अतीर्थसिद्धाः, मरुदेवीप्रभृतयो वा, तदा तीर्थस्यानुत्पन्नत्वात् २। तीर्थकरसिद्धास्तीर्थकरत्वमनुभूय सिद्धाः ३। अतीर्थकरसिद्धाः सामान्यकेवलिनः सन्तः सिद्धाः ४। स्वयंबुद्धाः सन्तो ये सिद्धास्ते स्वयंबुद्धसिद्धाः ५। प्रत्येकबुद्धाः सन्तो ये सिद्धास्ते प्रत्येकबुद्धसिद्धाः ६। स्वयंबुद्धप्रत्येकबुद्धयोश्च बोध्युपधिश्रुतलिङ्गकृतो विशेषः। स्वयंबुद्धा हि बाह्यप्रत्ययमन्तरेणैव जातिस्मरणादिना बुध्यन्ते। प्रत्येकबुद्धास्तु बाह्यप्रत्ययेन वृषभादिना, करकण्ड्वादिवत्। उपधिस्तु स्वयंबुद्धानां पात्रादिर्द्वादशधा। प्रत्येकबुद्धानां प्रावरणवर्जो नवविधः, जघन्येन च रजोहरणमुखपोतिकारूपः। स्वयंबुद्धानां पूर्वाधीतश्रुतं भवति वा न वा। प्रत्येकबुद्धानां तु नियमाद्भवत्येव, जघन्येनैकादशाङ्गानि उत्कृष्टतोऽभिन्नदशपूर्वाणि। लिङ्गप्रतिपत्तिस्तु स्वयंबुद्धानां यदि पूर्वाधीतश्रुतं नास्ति ततो गुरुसमीप एव, गच्छे च विहरन्ति। अथास्ति ततो देवता लिङ्गं प्रयच्छति गुरु-

१ "[illegible]" स्थाने "सिद्धा निष्ठितार्था" इत्यपि पाठो दृश्यते। २ "वदन्ति" इत्यपि॥

मते । प्रत्येकबुद्धानां तु लिङ्गं देवतैव ददाति, अलिङ्गा वा भवन्ति । बुद्धा आचार्य अवगततत्त्वास्तैर्बोधिताः मन्तो
ये सिद्धास्ते बुद्धबोधितसिद्धाः ७ । एत एव प्रत्येकबुद्धवर्जिताः केचित्स्त्रीलिङ्गसिद्धाः ८ । केचित्पुंलिङ्गसिद्धाः ९ । केचित्तु
तीर्थकृत्प्रत्येकबुद्धवर्जिता नपुंसकलिङ्गसिद्धाः १० । स्वलिङ्गेन रजोहरणादिना द्रव्यलिङ्गेन सिद्धाः स्वलिङ्गसिद्धाः ११ ।
अन्येषां परिव्राजकादीनां लिङ्गेन सिद्धा अन्यलिङ्गसिद्धाः । यदाऽन्यलिङ्गिनोऽपि भावतः सम्यक्त्वादिप्रतिपन्नाः केव-
लज्ञानमुत्पाद्य तत्कालं काले कुर्वन्ति तदैवं द्रष्टव्यम् । दीर्घायुष्कसद्भावे तु तेऽपि साधुलिङ्गमेव प्रतिपद्यन्ते १२ । एवं
गृहिलिङ्गसिद्धाः अपि मरुदेव्यादयः १३ । एकैकस्मिन् समये एकैकसिद्धिगमनादेकसिद्धाः १४ । एकस्मिन्समये द्व्यादी-
नामष्टोत्तरशतपर्यन्तानां सेधनादनेकसिद्धाः १५ । चशब्दः समुच्चये । तीर्थसिद्धाऽतीर्थसिद्धरूपभेदद्वये सर्वेषामन्तर्भा-
वेऽपि पृथगभिधानं विशेषभेदपरिज्ञापनार्थम् ॥ साम्प्रतं संसारिणः प्ररूपयति—संसारिणो पुण एगविहदुविहाइभे-
एहिं अणेगहा पण्णत्ता ॥ स्पष्टम् ॥ अथैकविधादीनेव प्रकारान् क्रमेण व्याचष्टे—तंजहा—एगविहा सव्वेसिंपि
सामन्नेणं उवओगलक्खणभावाओ ॥ उपयोगः साकारानाकारभेदाविवक्षया चैतन्यसामान्यं तल्लक्षणत्वात्सर्वजीवा-
नामेकविधा जीवा इति गम्यते ॥ दुविहा तसा थावरा य ॥ त्रसनामकर्मोदयात्त्रसा द्वीन्द्रियादयः । स्थावरनामक-
र्मोदयात्स्थावरा एकेन्द्रियाः ॥ अहवा संववहारिआ असंववहारिआ य ॥ अथवेति द्वैविध्यस्यैव प्रकारान्तरद्योतने
... जे अणाइकालाओ आरब्भ सुहुमनिगोएसुं चिअ चिट्ठंति न कयाइ तसाइभावं

पत्ता ते असंववहारिआ । जे पुण सुहुमनिगोएहिंतो निग्गया सेसजीवेसु उप्पन्ना ते संववहारिआ । ते अ पुणोऽवि सुहुमनिगोअत्तं पत्तावि संववहारिअ चिअ भण्णंति ॥ इदमत्र हृदयम्—सर्वसंसारिणां प्रथममनादिकालादारभ्य सूक्ष्मनिगोदेष्वेवावस्थानं, तेभ्यश्च निर्गताः शेषजीवेषूत्पन्नाः पृथिव्यादिविविधव्यवहारयोगात्सांव्यवहारिकाः । ते च यद्यपि कदाचिद्भूयोऽपि तेष्वेव निगोदेषु गच्छन्ति, परं तत्रापि सांव्यवहारिका एव व्यवहारे पतितत्वात् । ये तु न कदाचित्तेभ्यो निर्गताः—"अत्थि अणंता जीवा, जेहिं न पत्तो तसाइपरिणामो । तेऽवि अणंताणंता, निओअवासं अणुहवन्ति" ॥१॥ इति वचनात्तत्रैवोत्पत्तिव्ययभाजस्ते तथाविधव्यवहारातीतत्वादसांव्यवहारिकाः । इह च जीवानां द्वैविध्यं संज्ञ्यसंज्ञिभव्याभव्याहारकानाहारकादिभिः प्रकारान्तरैरपि यथासंभवं वाच्यम् ॥ तिविहा थीपुंनपुंसगवेअभेएणं ॥ तत्र देवा असंख्येयवर्षायुर्मनुष्यतिर्यञ्चश्च स्त्रीपुंसवेदाः । संख्येयवर्षायुर्गर्भजमनुष्यतिर्यञ्चस्त्रिवेदाः । शेषाः सर्वेऽप्येकेन्द्रियाद्या असंज्ञिपञ्चेन्द्रियावसाना नारकाश्च नपुंसकवेदा इति वेदत्रयभेदेन त्रिविधा जीवाः ॥ संजयअसंजयसंजयासंजयभेएण वा ॥ वाशब्दः प्रकारान्तरार्थः, संयताः सम्यक्सावद्ययोगेभ्य उपरताः प्रमत्तादिगुणस्थानकवर्तिनः । असंयताः संयमरहिता मिथ्यादृशः सास्वादना मिश्रा अविरतसम्यग्दृष्टयश्च । संयतासंयताः देशविरताः । ततो द्वन्द्वसमासे संयतासंयतसंयतासंयतास्तैर्हेतुभिर्यो भेदो विशेषस्तेन ॥ भव्वाभव्वजाइभव्वविगप्पेण वा ॥ वाशब्दः प्राग्वत् । भव्याभव्यजातिभव्यैः कृत्वा यो विकल्पो भेदस्तेन ॥ एतदेव व्यनक्ति—तत्थ भव्वा सिद्धिगइजोग्गा, इअरे अभव्वा, जाइ



१ इतः परम् "विकल्पशब्दो भेदार्थः । एतदेव व्यनक्ति" इति स्थाने पुस्तकान्तरे पाठः ॥

भव्या पुण ते जे जाईए भव्वा न उण कयावि सिज्झिहिंति । भणिअं च—सामग्गिअभावाओ, ववहारि-
भरासिअप्पवेसाओ । भव्यावि ते अणंता, जे सिद्धिसुहं न पावंति ॥ १ ॥ दूरेऽदूरे वा मुक्तिगमनेन भवि-
ष्यन्तीति भव्याः । तद्विपरीता अभव्याः । जातिभव्याः पुनस्ते ये जात्या भव्या न पुनः कदाचिन्मोक्ष्यन्ति । भणितं चेति
पूर्वर्षिप्रणीतगाथोपन्यासार्थम् । गाथार्थश्च स्पष्ट एव । इह च सम्यग्दृष्टिमिथ्यादृष्टिसम्यग्मिथ्यादृष्ट्यादिभिर्विधान्तरैरपि
यथागमं त्रैविध्यं भावनीयम् । एवं चातुर्विध्यादिष्वपि विधान्तरता यथासंभवं वाच्या ॥ चउव्विहा नारयाऽऽगइ न-
उक्कमायाओ ॥ नारकादिगतिनामकर्मोदयान्नारकास्तिर्यञ्चो मनुष्या देवाश्चेति चतुर्विधा जीवाः । स्त्रीपुंनपुंसकवेदा
अवेदाश्चेति वा चातुर्विध्यम् । तत्रावेदा वेदस्योपशमितत्वात् क्षपितत्वाद्वाऽनिवृत्तिबादरादयो ग्राह्याः ॥ पंचविहा इगाइ-
निय उपंचिंदियरोणं ॥ एकेन्द्रियादित्वेन पञ्चविधाः प्रतीता एव ॥ छव्विहा पुढवीआउतेउवाउवणप्फइतसका-
यरूवणाए ॥ स्पष्टम् ॥ सत्तविहा जहा—किण्हाइछल्लेसापरिणया अजोगिकेवलिणो अलेसा य ॥ लिश्यते श्लिष्यते
कर्म्मणा सह जीवो याभिस्ता लेश्याः । कृष्णनीलकापोततेजःपद्मशुक्लवर्णद्रव्यसाहाय्याज्जीवस्याशुभाः शुभाश्च परिणामविशे-
षाः । उक्तं च—"कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः । स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥ १ ॥" कृष्णादि-
द्रव्याणि तु सकलकर्म्मप्रकृतिनिस्यं(ष्य)न्दभूतानि । तासां तु स्वरूपम्—"मूलं १ साह २ पसाहा ३, गुच्छ ४ फले ५ पडिअ ज-
म्बु ६ भक्खणया । सव्वं १ माणुस २ पुरिसे ३, साउह ४ जुज्झन्त ५ धणहरणा ६ ॥ २ ॥" इति गाथोक्तदृष्टान्तद्वयाद्भावनीयम् ।
ततश्च कृष्णलेश्यापरिणता नीललेश्यापरिणता इत्याद्यभिलापेन षड् भेदाः । अयोगिकेवलिनो लेश्यातीता इति सप्तमो भेदः ॥

अट्ठविहा जहा—अंडया १ पोअया २ जराउआ ३ रसया ४ संसेइमा ५ संमुच्छिमा ६ उब्भिआ ७ उववाइआ य ८ ॥ अण्डाज्जाता अण्डजाः पक्षिगृहकोकिलामत्स्यसर्पादयः । पोतो जरायुरहितो गर्भः पोतरूपा जायन्ते पोतजा हस्तिश्वाविच्छशशारिकादयः । जरायौ गर्भवेष्टने जातास्तद्वेष्टिता इत्यर्थो जरायुजा मनुष्यगोमहिष्यादयः । रसाज्जाता रसजा मद्यतक्रारनालादिभवाः कीटाः । संस्वेदाज्जाताः संस्वेदजा मत्कुणयूकाद्याः । संमूर्च्छनं संमूर्च्छस्तेन निर्वृत्ताः सम्मूर्च्छिमाः शलभपिपीलिकामक्षिकाशाल्लूरादयः । उद्भेदाद्भूमिभेदाज्जाता उद्भेदजाः पतङ्गखञ्जरीटादयः । उपपाते देवशयनीयादौ भवा औपपातिका देवा नारकाश्चेति । देवनरतिर्यङ्नारकाणां पर्याप्तापर्याप्तत्वेनाप्यष्टविधा जीवा वाच्याः ॥ नवविहा जहा—पुढवीआउतेउवाउवणस्सई बितिचउपंचिंदिआ य ॥ सुबोधम् ॥ एए चिअ पंचिंदिआणं सन्निअस्सन्निभेअचिंताए दसविहा ॥ एत एव पूर्वोक्ता नव पञ्चेन्द्रियाणां संज्ञ्यसंज्ञिभेदचिन्तायां दशविधाः । तथाहि—पृथिव्यप्तेजोवायुवनस्पतयो द्वित्रिचतुरिन्द्रियाः संज्ञ्यसंज्ञित्वेन द्विविधाः पञ्चेन्द्रियाश्च ॥ एक्कारसहा जहा—सुहुमबायरत्तेणं दुभेआ एगिंदिआ २ बितिचउरिंदिआ ५ जलथलनहयरभेआ पंचिंदिअतिरिआ ८ मणुआ ९ देवा १० नारया य ११ ॥ सूक्ष्मा बादराश्चेति द्विविधा एकेन्द्रियाः, द्वित्रिचतुरिन्द्रिया निर्विशेषणा एव त्रयः, जलचरस्थलचरनभश्चरभेदास्त्रिविधाः पञ्चेन्द्रियतिर्यञ्चः, तत्र जलचरा मत्स्याद्याः, स्थलचरा गवाद्याः, नभश्चरा गृध्राद्याः, मनुजा देवा नारकाश्च ॥ बारसविहा पुण पुव्वदंसिआणं छकायाणं पज्जत्तापज्जत्तेणं ॥ षट्कायाः पृथिव्यप्तेजोवायुवनस्पतित्रसलक्षणाः, तेषां पर्याप्तापर्याप्तत्वेन द्वादशविधा जीवाः । तत्र—"आहारसरीरिंदिअ—पज्जत्ती आणपाणभासमणे ।

चत्तारि पंच छप्पिय, एगिंदियविगलसन्नीणं ॥ १ ॥" इति गाथोक्तस्वस्वयोग्यपर्याप्तिभिः परिपूर्णाः पर्याप्ताः, इतरेऽपर्याप्ताः ॥ तेरसविहा जहा—एगे सुहुमनिगोअरूवे असंववहारिए भेए बारससंववहारिआ य । ते अ इमे-पुढवीआउतेउवाउनिगोआ सुहुमबायरत्तेणं दुदुभेआ पत्तेयवणस्सई तसा य ॥ इयमत्र भावना—सांव्यवहारिकाऽसांव्यवहारिकत्वेन जीवानां द्वैविध्यं प्रागदर्शितम् । तत्रासांव्यवहारिको राशिरेक एव सूक्ष्मनिगोदानामेवासांव्यवहारिकत्वात् । सांव्यवहारिकभेदास्तु द्वादश, ते चेमे—पृथिव्यादयः पञ्च सूक्ष्मबादरतया द्विद्विभेदाः, प्रत्येकवनस्पतयस्त्रसाश्च ॥ चउद्दसविहा जहा—सुहुमबायरा एगिंदिआ २ बितिचउरिंदिआ ५ असन्निसन्निभेआ पंचिंदिआ ७ एए सत्तवि पज्जत्ता अपज्जत्ता य ॥ स्पष्टम् ॥ [redacted] चतुर्दशविधत्वमन्यथापि बोद्धव्यम् । यथा—पृथ्व्यप्तेजोवायुवनस्पतीनां प्रत्येकं सूक्ष्मबादरत्वाद्दशधा स्थावराः, द्वीन्द्रियादित्वेन चतुर्धा त्रसाश्च । यद्वा पृथ्व्यप्तेजोवायुवनस्पतयो, द्वित्रिचतुरिन्द्रियाः, जलस्थलखचारित्वेन त्रेधा तिर्यञ्चः, सुरा नरा नारकाश्चेति ॥ गुणस्थानभेदेन चतुर्दशविधत्वं सूत्रेणवाह—अहवा मिच्छद्दिट्ठी १ सासायणसम्मद्दिट्ठी २ सम्मामिच्छद्दिट्ठी ३ अविरयसम्मद्दिट्ठी ४ देसविरए ५ पमत्तसंजए ६ अपमत्तसंजए, निअट्टिबायरसंपराए ८ अनिअट्टिबायरसंपराए ९ सुहुमसंपराए १० उवसंतकसायवीअरायछउमत्थे ११ खीणकसायवीअरायछउमत्थे १२ सजोगिकेवली १३ अजोगिकेवली अत्ति १४ चउद्दसगुणट्ठाणवट्टित्तेणं चउद्दसहा जीवा ॥ अथवाशब्दो गुत्यन्तरद्योतने मिथ्या विपर्यस्ता

---

१ "श्चेत्यादि" इत्यपि ॥

दृष्टिरर्हत्प्रणीततत्त्वप्रतिपत्तिर्यस्य स मिथ्यादृष्टिः १ । आयमौपशमिकसम्यक्त्वलाभलक्षणं सादयत्यपनयतीति नैरुक्ते यशब्दलोपे आसादनमनन्तानुबन्धिकषायवेदनं तेन सह वर्त्तत इति सासादनः । अथवा सह सम्यक्त्वलक्षणरसास्वादनेन वर्त्तत इति सास्वादनः स चासौ सम्यग्दृष्टिश्च सासादनसम्यग्दृष्टिः सास्वादनसम्यग्दृष्टिर्वा । अयं हि तदा भवति, यदाऽन्तरकरणं कृत्वा प्राप्तौपशमिकसम्यक्त्वः कश्चिदान्तर्मुहूर्त्तिक्यामुपशान्ताद्धायां जघन्येन समयशेषायामुत्कृष्टतः षडावलिकाशेषायामनन्तानुबन्धिकषायोदयं प्राप्य मिथ्यात्वाभिमुखः सम्यक्त्वमुद्वमंस्तद्रसमास्वादयति । उपशमश्रेणिप्रतिपतितो वा कश्चित्सासादनत्वं यातीति कार्मग्रन्थिकमतम् । सिद्धान्तमते तु श्रेणेः समासौ प्रतिपतितः प्रमत्तगुणस्थानेऽप्रमत्तगुणस्थाने वा तिष्ठति । कालगतस्तु देवेष्वविरतो भवति, सासादनोत्तरकालं चावश्यं मिथ्यात्वं गच्छति २ । सम्यक् च मिथ्या च दृष्टिर्यस्य स सम्यग्मिथ्यादृष्टिः, स चैवं भवति–इह जीवोऽन्तरकरणलब्धौपशमिकसम्यक्त्वेन मिथ्यात्वमोहनीयं कर्म शोधयित्वा शुद्धार्द्धविशुद्धाऽविशुद्धरूपपुञ्जत्रयत्वेन स्थापयति, तन्मध्याच्च यदार्द्धविशुद्धपुञ्जोदयस्तदा जिनोक्ततत्त्वेषु रागद्वेषाभावात्सम्यग्मिथ्यादृष्टित्वमान्तर्मौहूर्त्तिकं लभते, परतश्चावश्यं सम्यक्त्वं मिथ्यात्वं वा गच्छति३ । अविरतोऽप्रत्याख्यानावरणकषायोदयादल्पामपि विरतिमप्रतिपन्नः स चासौ सम्यग्दृष्टिश्च अविरतसम्यग्दृष्टिः, स चौपशमिकसम्यग्दृष्टिः क्षायोपशमिकसम्यग्दृष्टिः क्षायिकसम्यग्दृष्टिर्वा ४ । देशात् स्थूलसङ्कल्पजप्राणातिपातादिकाद्विरतो देशविरतः, सर्वविरतस्तु प्रत्याख्यानावरणकषायोदयान्नास्ति ५ । संज्वलनकषायनिद्राद्यन्यतमप्रमादत्वात् प्रमत्तः, सर्वसावद्ययोगेभ्यः सम्यगुपरतः संयतः, प्रमत्तश्चासौ संयतश्च प्रमत्तसंयतः ६ । निद्रादिप्रमादरहितोऽप्रमत्तः, स चासौ संय-

तश्चाऽप्रमत्तसंयतः ७। निवर्त्तनं निवृत्तिः। अस्मिन्गुणस्थानेऽन्तर्मुहूर्त्तप्रमाणे नानाजीवानाश्रित्यासंख्येयलोकाकाशप्रदेशप्रमाणानां प्रतिसमयं यथोत्तरमधिकानामध्यवसायस्थानानां प्राप्यमाणत्वात् युगपत्प्रविष्टानां जीवानामन्योन्यमध्यवसायस्थानस्य व्यावृत्तिर्नानात्वमिति यावत्, तद्योगात्स्थूलकषायवेदनाच्च निवृत्तिबादरसम्परायः। एतद्गुणस्थानवर्त्तिनापूर्वाणां स्थितिघातरसघातगुणश्रेणिगुणसंक्रमस्थितिबन्धानां पञ्चानां पदार्थानां निर्वर्तनादपूर्वकरणोऽप्युच्यते। क्षपक उपशमकश्चेत्ययं द्विधा। क्षपणोपशमनार्हत्वाच्चैवमुच्यते, राज्यार्हकुमारराजवत्, न पुनरसौ क्षपयत्युपशमयति वा ८। न विद्यते निवृत्तिः पूर्वोक्तस्वरूपाऽस्येत्यनिवृत्तिः। अस्मिन्गुणस्थानेऽन्तर्मुहूर्त्तप्रमाणे प्रतिसमयमेकैकस्यैवाध्यवसायस्थानस्य प्राप्यमाणत्वाद्युगपत्प्रविष्टा बहवोऽपि तदेवाध्यवसायस्थानमनुवर्त्तन्त इत्याशयः। अनिवृत्तिश्चासौ बादरसम्परायश्चानिवृत्तिबादरसम्परायः, क्षपकोपशमकतया द्वैविध्यमस्य ९। सूक्ष्मः किट्टीकृतो लोभाख्यः सम्परायो यस्य स सूक्ष्मसम्परायः, सोऽपि क्षपक उपशमकश्च १०। भस्मच्छन्नाग्निवदुपशान्ताः कषाया यस्य स उपशान्तकषायोऽत एव वीतरागः न चासौ छद्मस्थश्च ज्ञानावरणीयादिघातिकर्मोदयवानुपशान्तकषायवीतरागच्छद्मस्थः ११। एवं सर्वथाप्यभावप्राप्तकषायः क्षीणकषायवीतरागच्छद्मस्थः १२। योगो व्यापारः, उक्तं च—"कायवाङ्मनःकर्म्म योगः" सह योगेन वर्त्तन्ते ये ते सयोगा मनोवाक्कायाः, ते यस्य विद्यन्ते स सयोगी, स चासौ केवली च केवलज्ञानदर्शनवान् सयोगिकेवली १३। योगः पूर्वोक्तोऽस्यास्तीति योगी न योगी अयोगी स चासौ केवली चायोगिकेवली १४। चशब्दः समुच्चये इत्युक्तप्रकारेण चतुर्दशगुणस्थानवर्त्तित्वेन चतुर्दशधा जीवाः। ननु गुणस्थानशब्दस्य कोऽर्थः?, उच्यते, गुणा ज्ञानदर्शनचारित्ररूपा जीवस्व-

भावविशेषाः, तिष्ठन्ति गुणा अस्मिन्निति स्थानं, गुणानां स्थानं गुणस्थानम्, ज्ञानादिगुणानामेव शुद्ध्यशुद्धिप्रकर्षापकर्ष-कृतः स्वरूपभेदः । कथं तर्हि मिथ्यादृष्टेर्गुणस्थानता ?, उच्यते, कस्याश्चिन्मनुष्यपश्वादिप्रतिपत्तेरवितथत्वात्, न चैवं तदपेक्षया सम्यग्दृष्टित्वस्यापि प्रसङ्गः । यतः कृत्स्नमपि प्रवचनार्थमभिरोचयमानस्तद्गतैकाक्षरारोचनेऽपि मिथ्यादृष्टिरेव, भगवति सर्वज्ञे प्रत्ययनाशात् । निगोदावस्थायां तु चैतन्यमात्रगुणभावाद्गुणस्थानतेति ॥ एवमेकद्व्यादीनाचतुर्दशभ्यो नि-स्तार जीवभेदानभिधाय संक्षिपन्नाह—एवं बुद्धिमंतेहिं सिद्धंताणुसारेण अणेगहा जीवभेआ परूवियव्वा ॥ स्पष्टम् ॥ प्रकारान्तरं पुनरेवम्—एकद्वित्रिचतुष्पञ्चेन्द्रियाणां भव्याभव्यजातिभव्यत्वभेदैः पञ्चदशविधा जीवाः । अण्डजा-दीनामष्टानां पर्याप्तापर्याप्तत्वेन षोडशविधाः, इत्यादि यथागममुन्नेयम् । प्रसिद्धत्वाद्द्वात्रिंशद्विधा उच्यन्ते, तत्संज्ञाहिका चेयं पूर्वाचार्यप्रणीता गाथा—"पुढविदगअगणिमारुअ–वणसइणंता पणिंदिआ चउहा । वणपत्तेआ विगला, दुविहा सव्वेवि बत्तीसं ॥ १ ॥" पृथिव्युदकाग्निमारुतसाधारणवनस्पतयः सूक्ष्मबादरपर्याप्तापर्याप्तत्वेन पञ्चेन्द्रियास्तु संज्ञ्यसंज्ञिपर्याप्तापर्याप्तत्वेन प्रत्येकं चतुर्विधाः, प्रत्येकवनस्पतिद्वित्रिचतुरिन्द्रियाः पर्याप्तापर्याप्तत्वेन द्विभेदाः, सर्वे द्वात्रिंशत् ॥ अथैतेषां जीवानां भवस्थितिप्रभृतिकं किञ्चिदाह—अह पयासि जीवाणं संखेवेणं भवट्ठिई परूविमो । तंजहा—पुढवीए बावीसवा-ससहस्साइं ठिई पण्णत्ता, जलस्स सत्तवाससहस्सा, अगणिस्स तिण्णि दियाणि, वाउस्स पत्तेअवणस्स-इणो अ तिण्णि दस य वाससहस्साइं ॥ भवे नारकादिजन्मनि तिष्ठन्ति जन्तवो यया कर्मपरिणत्या सा भवस्थिति-रायुरित्यर्थः । शेषं स्पष्टम् ॥ एषा चानन्तरोक्ता सर्वापि स्थितिः पृथिवीकायिकादीनां बादरपर्याप्तविशेषणविशिष्टानामु-

प्रथमो-
ऽध्यायः
॥ ७ ॥

त्कृष्टा वाच्येत्याह—एसा सव्वावि बायरपज्जत्ताणं पएसिं उक्कोसा ठिई ॥ प्रत्येकवनस्पतेः सूक्ष्मत्वाभावेन व्यवच्छेद्याभावाद्बादरविशेषणं त्यक्त्वा पर्याप्तत्वेनैव विशिष्टता स्वयं भावनीया ॥ अथ पर्याप्तानां द्वीन्द्रियादीनामाह—अह पज्जत्ताणं बेइंदियाईणं भण्णइ—बेइंदिआणं बारसवासा, तेइंदिआणं अउणापन्नदिणाणि, चउरिंदिआणं छम्मासा ॥ स्पष्टम् ॥ पञ्चेन्द्रिया द्विधा संज्ञिनोऽसंज्ञिनश्च, गर्भजाः संज्ञिनः, सम्मूर्च्छिमा असंज्ञिनः । तत्रासंज्ञिपञ्चेन्द्रियतिरश्चां स्थितिमाह—असन्निपंचिंदिअतिरिआणं जलयराणं पुव्वकोडी, थलयराणं खयराणं च चउरासीई बायत्तरी अ वाससहस्साइं ॥ पर्याप्तविशेषणं पूर्वसूत्रादनुवर्त्तनीयम् । असंज्ञिपञ्चेन्द्रियतिरश्चामिति जलस्थलखचरेषु योज्यम् । ततोऽयमर्थः—पर्याप्तानामसंज्ञिपञ्चेन्द्रियतिरश्चां जलचराणां मत्स्यादीनां पूर्वकोटिरुत्कृष्टा स्थितिः । तथाविधानामेव स्थलचराणां चतुरशीतिवर्षसहस्राणि । तादृशानामेव खचराणां बलाकादीनां द्विसप्ततिवर्षसहस्राणीति । इह च स्थलचरास्त्रिधा । चतुष्पदा गवादयः । उरःपरिसर्पाः सर्पजातयः । भुजपरिसर्पा गोधानकुलादयः । तत्रैवं पूर्वोक्ता चतुरशीतिवर्षसहस्रात्मिका स्थितिश्चतुष्पदानामेव । उरःपरिसर्पाणां तु त्रिपञ्चाशद्वर्षसहस्राः । भुजपरिसर्पाणां द्विचत्वारिंशद्वर्षसहस्राणीति समयोक्तो विशेषः ॥ सम्प्रति संज्ञिपञ्चेन्द्रियतिरश्चामाह—सन्निपंचिंदिअतिरिआणं जलयरथलयरखयराणं जहासंखं पुव्वकोडी, पलिओवमतिगं, पलिओवमासंखभागे अ ॥ पर्याप्तानामित्यनुवर्त्तते । पर्याप्तसंज्ञिपञ्चेन्द्रियतिरश्चां जलचराणां पूर्वकोटिः । तथाविधानामेव स्थलचराणां पल्योपमत्रिकम् । एतच्चतुष्पदानेवाश्रित्योक्तम् ।

[1] "तादृग्विशेषणानामेव" इति पाठः । २ "तेन उत्कृष्टा च—" "तत्रोत्कृष्ट—" इत्यपि पाठः । ३ "तादृग्विशेषणानामेव" इत्यपि पाठः ॥

तु दुविहावि अंगुलासंखेज्जभागे ॥ उक्तार्थम् ॥ तथा—देवाणं सत्तरयणी । नेरइआणं पंचधणुसयाणि ॥ ओघवचनमिदम् । विशेषचिन्तायां तु भवनपतिव्यन्तरज्योतिष्केषु सौधर्मेशानकल्पयोश्च देवानामवगाहना सप्त रत्नयो हस्ता इत्यर्थः । ततः परं द्वयोर्द्वयोर्द्वयोश्चतुर्षु च कल्पेषु ग्रैवेयकनवकेऽनुत्तरपञ्चके च क्रमेण षट् पञ्च चत्वारस्त्रयो द्वावेकश्च हस्त इति । तथा रत्नप्रभायां नारकाणामवगाहना सप्त धनूंषि त्रयो हस्ताः षडङ्गुलानि । सैव शर्कराप्रभादिषु द्विगुणद्विगुणा यावत्तमस्तमःप्रभायां पञ्च धनुःशतानीति । वैमानिकदेवानां स्थित्यनुसारेण नारकाणां चैकाश्रपञ्चाशत्प्रस्तटेषु योऽवगाहनाविशेषः स इह ग्रन्थगौरवभयान्न प्रतन्यते । इयं देवनारकाणां स्वाभाविकदेहस्योत्कृष्टाऽवगाहना । जघन्या तूपपातकालेऽङ्गुलासंख्येयांशप्रमाणा । उत्तरवैक्रियदेहस्तु देवानामुत्कर्षतो योजनलक्षम् । नारकाणां स्वाभाविकाद्द्विगुणः । जघन्यतस्तूभयेषामप्यङ्गुलसंख्येयभागमात्र इति ॥ सम्प्रति जीवतत्त्वाश्रितवक्तव्यस्य बाहुल्यात्कियदत्र वक्तुं शक्यमिति सिद्धान्तोदधेरवधार्यमित्याह—ठिइओगाहणाविसया विसेसा कायठिई पाणा पज्जत्तीओ लेसाओ इचाइअं सुअसागराओ विआणिअव्वं ॥ निगदसिद्धम् । नवरं कायस्थितिर्मृत्वा मृत्वा तत्रैव विवक्षिते पृथिवीकायादावुत्पादतोऽवस्थानम् । तत्र पृथिव्यप्तेजोवायूनां कायस्थितिः प्रत्येकमसंख्येया उत्सर्पिण्यवसर्पिण्यः । वनस्पतिकायेष्वनन्ताः । द्वित्रिचतुरिन्द्रियाणां प्रत्येकं संख्याता वर्षसहस्राः । पञ्चेन्द्रियतिरश्चां मनुष्याणां च संज्ञिपर्याप्तानां सप्ताष्टौ वा भवा इति । तथा प्राणाः पञ्चेन्द्रियत्रिविधबलनिःश्वासोच्छ्वासायुर्लक्षणा दश, ते चैकद्वित्रिचतुरिन्द्रियाऽसंज्ञिसंज्ञिपञ्चेन्द्रियेषु । क्रमाच्चतुःषट्स-

१ —"षु यथोत्तरं द्विगुणद्विगुणा तमस्तमःप्रभायां पञ्च धनुःशतानि भवन्ति" इत्येवंरूपोऽपि पाठः । २ "इत्यादि" इत्यपि ॥

साष्टनवदशसंख्याः स्युः । आदिशब्दाद्योनिकुलादिसंग्रहः ॥ अथ चतुर्दशविधजीवप्ररूपणाप्रस्तावे यानि चतुर्दशगुण-
स्थानान्युक्तानि, तेषामवस्थानकालप्रमाणं विवक्षुराह—इआणिं मिच्छदिट्ठिपभिईणं चउदसण्हं गुणठाणाणं
ठिइकालं दंसिज्जइ ॥ स्पष्टम् । मिथ्यात्वस्य भङ्गत्रयेण स्थितिकालमाह—मिच्छत्तस्स तिविहे ठिइकाले पण्णत्ते ।
तंजहा–अणाइअणंते १ अणाइसंते २ साइसंते अ ३ ॥ अभव्यानां मिथ्यात्वस्याद्यन्तरहितत्वात्प्रथमो भङ्गः । अन्यौ
द्वौ भङ्गौ भव्यानाम्[1] । एतदेवाह—तत्थ अभव्वा पढमे भंगे, भव्वा पुण अतइएसु ॥ भव्यानां भङ्गद्वयं भावय-
न्नाह—अणाइमिच्छदिट्ठिस्स भव्वस्स सम्मत्तलाभे मिच्छत्तस्स अंतभावाओ अणाइसंतत्तं । जे पुण लद्धस-
म्मत्ते मिच्छत्तं गच्छइ, मिच्छत्ते अ जहन्नेणं अंतोमुहुत्तं उक्कोसेणं देसूणमद्धपुग्गलपरिअट्टं ठाऊणं पुणोवि
सम्मत्तं पवज्जइ, तस्स साइसंतं मिच्छत्तंति ॥ योऽनादिमिथ्यादृष्टिर्भव्यस्तस्य भव्यत्वान्यथानुपपत्तेरवश्यं सम्यक्त्व-
लाभे मिथ्यात्वस्यान्तभावादनादिसान्तत्वम् । यस्त्वनादिमिथ्यादृष्टिर्लब्धसम्यक्त्वः कुतोऽपि भूयो मिथ्यात्वं याति,
तस्य तदा मिथ्यात्वं सादि । तत्र चासौ जघन्येनान्तर्मुहूर्तमुत्कर्षतस्त्वाशातनादिपापबहुलतया देशोनमर्द्धपुद्गलपरावर्त्तं
पुद्गलपरावर्तार्द्धं स्थित्वा पुनरपि सम्यक्त्वं प्रयाति, तदा सान्तमिति मिथ्यात्वं सादिसान्तम् । साद्यनन्तं तु न स्यादेव,
यतः प्रतिपतितसम्यग्दृष्टीनामेव मिथ्यात्वं सादि तच्च सान्तमेव । इतिशब्दो मिथ्यात्वभङ्गत्रयप्ररूपणासमाप्तौ ॥ तथा—
सासाणं छावलीपमाणं । तं च अणंताणुबंधिकसाओदए उवसमिअसम्मत्तं वमंतस्स मिच्छत्तमपत्तस्स

१ "एतौ द्वौ भव्यानाम्" इत्यपि पाठः ॥

भवइ ॥ प्रागुक्तमिदम् ॥ अविरयसम्मत्तस्स ठिइकाले साहिआई तित्तीसं सागरोवमाइं ॥ अनुत्तरसुरेषु त्रयस्त्रिंशत्सागरोपमाणि । ततश्च्युत्वा चात्रोत्पन्नो विरतिलाभादर्वागविरतसम्यग्दृष्टिरेवेति साधिकत्वम् ॥ तथा—देसविरयस्स सजोगिकेवलिणो अ देसूणा पुव्वकोडी ॥ गर्भस्थस्य सातिरेका नव मासाः । जातोऽपि चाष्टौ वर्षाणि विरमते । तत ऊर्ध्वं प्रतिपन्नदेशविरतिर्घातिकर्मक्षयादुत्पन्नकेवलो वा यः पूर्वकोटिं जीवति, तस्यायं स्थितिकालः ॥ तथा—अजोगिकेवलिस्स लहुपंचक्खरुच्चारमेत्तं ॥ अनतिद्रुतविलम्बिततया अइउऋऌलक्षणपञ्चह्रस्वाक्षरोच्चारप्रमाणोऽयोगिकेवलिनः स्थितिकालस्तदूर्ध्वं मुक्तिप्राप्तेः ॥ तथा—मीसस्स पमत्ताईणं च सत्तण्हं अंतोमुहुत्तं ॥ एषामष्टानां प्रत्येकमन्तर्मुहूर्तम् , परतो गुणस्थानान्तरगमनात्कालकरणाद्वा ॥ निगमयन्नाह—एसो उक्कोसओ ठिइकाले ॥ स्पष्टम् ॥ जहन्नओ पुण सासायणस्स पमत्ताईणं च छण्हं एक्कसमए ॥ समयादूर्ध्वं मरणभावेनाऽन्यत्रोपगमात् ॥ अजोगिकेवलिस्स अजहन्नुक्कोसे पुव्वुत्ते चिअ काले ॥ स्पष्टम् ॥ सेसाणं छण्हं अंतोमुहुत्तं ॥ षण्णां मिथ्यात्वमिश्राऽविरतदेशविरतक्षीणमोहसयोगिकेवलिनाम् ॥

॥ इति समयसारटीकायां जीवतत्त्वनिरूपणो नाम प्रथमोऽध्यायः ॥ १ ॥

१ "पुव्वंकोडिपुहुत्ताइं" इत्येवंविधोऽपि पाठः ॥

॥ अथाजीवतत्त्वं प्ररूप्यते ॥

अजीवा पंचविहा पण्णत्ता । तंजहा—धम्मत्थिकाए १ अधम्मत्थिकाए २ आगासत्थिकाए ३ पुग्गलत्थिकाए ४ काले ५ अ ॥ जीवानां पुद्गलानां च स्वत एव गतिक्रियापरिणतानां तत्स्वभावधरणात्तत्स्वभावपोषणाद्धर्मः, अस्तयश्चेह प्रदेशास्तेषां कायः सङ्घातोऽस्तिकायः, ततो धर्मश्चासावस्तिकायश्च धर्मास्तिकायः सकललोकव्यापी असंख्येयप्रदेशात्मकोऽमूर्त्तो द्रव्यविशेष इत्यर्थः १ । जीवपुद्गलानामेव तथैव गतिपरिणतानां तत्स्वभावेऽधरणादधर्मः स्थित्युपष्टम्भकत्वात्तस्य, स चासावस्तिकायश्च अधर्मास्तिकायः । किमुक्तं भवति ?—जीवपुद्गलानां स्थितिपरिणामपरिणतानां तत्परिणामोपष्टम्भकोऽमूर्त्तो लोकव्यापी असंख्यातप्रदेशात्मकोऽधर्मास्तिकायः २ । लोकमात्रत्वं चानयोरेतद्व्यष्टव्याकाशदेशस्यैव लोकत्वात्, अलोकव्यापित्वे त्वनयोर्जीवपुद्गलानामपि तत्र चारप्रसङ्गे तस्यापि लोकत्वापत्तेः । तथा आङिति मर्यादया तत्सङ्गेऽपि स्वस्वरूपेऽवस्थानतः सर्वथा तत्स्वरूपाप्राप्तिलक्षणया काशन्ते स्वभावलाभेनावस्थितिकरणेन च दीप्यन्ते पदार्थसार्था यत्र तदाकाशम् । यदा त्वभिविधावाङ् तदाङिति सर्वभावाभिव्याप्त्याकाशते प्रतिभासते इत्याकाशं, तच्च तदस्तिकायश्चाकाशास्तिकायः, लोकालोकव्यापी अनन्तप्रदेशात्मको द्रव्यविशेष इत्यर्थः ३ । पूरणगलनधर्माणः पुद्गलाः परमाण्वादयोऽनन्ताणुस्कन्धपर्यन्ताः । एते हि कुतश्चिद्द्रव्याद्गलन्ति वियुज्यन्ते, किञ्चित्तु द्रव्यं स्वसंयोगतः पूरयन्ति पुष्टं कुर्वन्ति, पुद्गलाश्च तेऽस्तिकायश्च पुद्गलास्तिकायः ४ । कलनं समस्तवस्तुस्तोमस्य संख्यानमिति कालः । अथवा कलाः समयावलिकामुहूर्तादि वेत्यादिप्रकारेण सर्वमपि सचेतनाचेतनं वस्त्ववगच्छन्ति केवल्या-

प्रदेशोऽनेनेति कालः । प्रदेशप्रचयाभावादस्यास्तिकायत्वाभावः । अतीतानागतसमयानां विनष्टानुत्पन्नत्वेन प्रज्ञापकप्ररूपणाकाले वर्तमानसमयरूपस्यैकस्यैव कालप्रदेशस्य भावात् । यद्येवमावलिकामुहूर्त्तादिप्ररूपणाया अप्यभावप्रसङ्गः, तेषामसंख्येयसमयात्मकत्वेन प्रदेशबहुत्व एवोपपत्तेः, सत्यम्, स्थिरस्थूरकालत्रयवर्त्तिवस्त्वभ्युपगमपरव्यवहारनयमतमवलम्ब्य तत्प्ररूपणा । निश्चयनयमतेन तु तदभाव एव, चशब्दः समुच्चये ॥ अथैते पञ्चाप्यजीवा जीवास्तिकायेन समं द्रव्यषट्कमुच्यन्त इत्याह—एए पंचवि जीवत्थिकाएण समं छ दव्वाइं भण्णंति ॥ गतार्थम्, नवरं कालत्रयजीवनाज्जीवास्ते च तदस्तिकायश्च जीवास्तिकायः, प्रत्येकमसंख्येयप्रदेशात्मकसकललोकभाविनानाजीवद्रव्यसमूह इत्यर्थः । अत्र च जीवपुद्गलानां गत्यन्यथानुपपत्तेर्धर्मास्तिकायस्य तेषामेव स्थित्यन्यथानुपपत्तेरधर्मास्तिकायस्य जीवादिपदार्थावगाहनान्यथानुपपत्तेराकाशास्तिकायस्य घटादिकार्यान्यथाऽनुपपत्तेः पुद्गलास्तिकायस्य बकुलाशोकचम्पकादिषु पुष्पफलप्रदाननैयत्यान्यथानुपपत्तेः कालस्य प्रतिप्राणिस्वसंवेदनसिद्धचैतन्यान्यथानुपपत्तेश्च जीवास्तिकायस्य सत्त्वं समवसेयम् ॥ इदानीं षण्णामपि सामान्यस्वरूपमाह—सव्वेवि उप्पायनासठिइसहावा ॥ सर्वेऽपि षडपि धर्मास्तिकायादय उत्पत्तिविगमध्रौव्यस्वभावाः । सर्वत्राप्यन्वयिनि वस्तुनि पर्यायरूपतयोत्पादविनाशयोः प्रामाणिकानां सम्मतत्वात् । यदाह—“उत्पादव्ययध्रौव्ययुक्तं सदिति” आकाशादयोऽपि हि नित्यत्वेन प्रसिद्धाः प्रतिक्षणं तेन तेन पदार्थसंयोगेनोत्पद्यन्ते विपद्यन्ते च । प्रदीपादयोऽप्युत्पादविनाशयोगिनोऽवतिष्ठन्ते, न पुनरैकान्तिकस्थितियोगि उत्पा-

१ —“वयधुवसहावा”—इत्यपि पाठः ॥

दविनाशयोगि वा किञ्चिदस्ति । तथा चात्रानुमानम्—इह यद्यदस्ति-तत्सर्वं स्थित्युदयापवर्गसंसर्गमनुभवति, वस्तुत्वात् । यद्यद्वस्तु तत्तत्स्थित्यादिभिः क्रोडीकृतं यथाङ्गुलिरङ्गुलित्वमध्यमऋजुत्वापेक्षयेति । वस्तु च यदमि अतः प्रस्तुतत्रयाकान्तं तन्मन्तव्यमिति कृतं प्रसङ्गेन ॥ अथ कालवर्जितानां पञ्चानां प्रदेशबाहुल्यादस्तिकायत्वमाह—कालं विणा पएसबाहुल्लेणं अत्थिकाया ॥ व्याख्यातार्थम् ॥ पुद्गलवर्जानां पञ्चानामरूपित्वमाह—पुग्गलवज्जं अरूविणो ॥ पुद्गलानामेव रूपं तत्सहचारिणो रसादयश्च, न शेषाणाम् , तेन धर्मास्तिकायादयः पञ्चारूपिणोऽमूर्त्ता इत्यर्थः ॥ तथा—जीववज्जं अचेअणा अकत्तारा ॥ जीवश्चेतन उपयोगलक्षणत्वात् , कर्त्ता च शुभाऽशुभकर्म्मविधाता । शेषाः पञ्चापि धर्म्मास्तिकायादयोऽचेतना अकर्त्तारश्च । यदाह—"जीवमृते चाप्यकर्तॄणि" ॥ अथ षण्णामपि द्रव्याणां प्रत्येकं विशेषलक्षणमाह—तत्थ गइपरिणयाणं जीवपुग्गलाणं गइउवट्ठंभनिमित्तं धम्मत्थिकाए । ठिइपरिणयाणं ठिइउवट्ठंभहेऊ अधम्मत्थिकाए । अवगाहदायगमागासं । पूरणगलणधम्माणो पुग्गला ॥ प्रपञ्चितार्थम् । पुद्गलानामेव स्वरूपं विशेषेणाह—ते अ फरिसरसगंधवण्णोववेआ ॥ ते च पुद्गलाः स्पर्शनादीन्द्रियचतुष्कग्राह्यैः स्पर्शाद्यैश्चतुर्भिर्गुणैरुपेताः युक्ताः । उप-अप-इत इति शब्दत्रयस्य स्थाने शकन्ध्वादिदर्शनादुपपेत इति सिद्धम् । इदं परमाणूनां द्व्यणुकादिस्कन्धानां च सामान्यं लक्षणमुक्तम् ॥ स्कन्धानां तु विशिष्टमाह—सद्दबंधसुहुमथूलसंठाणभेयधयारायवुज्जोअच्छायाछुहुमत्तथूलत्तसरूवा ॥ शब्दादयः स्वरूपं येषां ते तथा, शब्दादीनां पुद्गलविकारत्वात् । तत्र शब्दो भाषालक्षणोऽन्यश्च । भाषालक्षणो द्विधा, साक्षरोऽनक्षरश्च । अन्योऽपि प्रायोगिको वैस्रसिकश्च । प्रायोगिकस्ततविततादिः । वैस-

शिव पर्जन्यादिजन्यः । बन्धोऽपि द्विधा, वैस्रसिकः प्रायोगिकश्च । वैस्रसिकः पुरुषप्रयोगाऽनपेक्षो विद्युदुल्केन्द्रधनुरादि, स च स्निग्धरूक्षत्वादिगुणनिमित्तः । प्रायोगिकस्तु अजीवविषयो जीवाजीवविषयश्च । तत्राद्यो जतुकाष्ठादिलक्षणः, द्वितीयो भावाऽऽनपानादि ज्ञानावृत्त्यादिकर्म्म वाऽपेक्ष्य ज्ञातव्य इति । भेदो विवक्षितस्कन्धारकतिपयपरमाणूनां विघटनम् । संस्थानं जीवानां समचतुरस्रादि । अजीवानां परिमण्डलादि । अन्धकारं तमः । आतपो दिनकरादावुष्णः प्रकाशः । उद्योतश्चन्द्रमणिखद्योतादावनुष्णः प्रकाशः । छाया प्रकाशावरणनिमित्ता । सूक्ष्मत्वं द्विधा, अन्त्यमापेक्षिकं च । अन्त्यं परमाणुषु आपेक्षिकं बिल्वामलकादिषु । स्थूलत्वमपि द्विधा, अन्त्यमापेक्षिकं च । अन्त्यं जगद्व्यापिन्यचित्तमहास्कन्धे, आपेक्षिकं बिल्वामलकादिषु, सर्वोऽप्येष पुद्गलपरिणाम इति तात्पर्यम् ॥ सम्प्रति जीवान् प्रति पुद्गलजन्यमुपग्रहमाह—

कम्मसरीरमणभासाआणपाणसुहदुक्खजीविअमरणोवग्गहहेऊ नायव्वा ॥ कर्म्म ज्ञानावारकादि, शरीरमौदारिकादि, मन इहापोहादिसमर्थं चित्तं, भाषा वाक्, आनपानौ उच्छ्वासनिःश्वासौ, सुखादीनि प्रतीतानि, एतान्येव उपग्रहो जीव स्योपकारस्तस्य हेतवो ज्ञातव्याः । पुद्गला इति प्रक्रमः । तत्र कर्म्माद्याकारेण साक्षादुपकारका आत्मनः पुद्गलाः । सुखाद्याकारेण तु परिणममानस्यात्मनो निमित्तमात्रतयोपग्राहका इति विशेषः ॥ तथा—काले वट्टणा परिणामाइलक्खणं ॥ वर्तन्ते भवन्ति भावाः तेन तेन रूपेण तेषां स्वयं तथाभवनेन वर्त्तमानानां वर्त्तध्वं वर्त्तध्वं मा निवर्त्तध्वमिति तत्प्रयोजकत्वं सा वर्त्तना कारितान्ताद्युजः “इष्विषन्त्यासि–”(का–४–५–८५) इत्यादिना भावे युः, इदं मुख्यकालस्य लक्षणम् । व्यावहारिकस्य तु वर्त्तनाया एव भेदरूपं परिणामादि । तत्र परिणामोऽपरिस्थितस्य द्रव्यस्य पूर्वधर्म्मनिवृत्तौ धर्म्मा-

१ ‘परिणमः’ सर्वसंघातपरिणामः ॥

धर्म्मनिवृत्तौ धर्म्मान्तरोत्पत्तिरूपोऽपरिस्पन्दात्मकः पर्यायः। उक्तं च—"परिणामोऽवस्थान्तरगमनं न च सर्वथा ह्यवस्थानम्। न च सर्वथा विनाशः, परिणामस्तद्विदामिष्टः॥१॥" इति। स च जीवस्य क्रोधादिः। पुद्गलानां वर्णादिः। धर्म्माधर्म्माकाशानां गत्युपग्राहकत्वादिः। सर्वोऽपि चायं परिणामोऽनादिः सामान्यापेक्षया। आदिमांश्च विशेषापेक्षया। आदिशब्दाद्देशान्तरप्राप्तिलक्षणा परिस्पन्दात्मिका क्रिया। कालकृतं च परत्वापरत्वं गृह्यते। उक्तं च—"वर्त्तनापरिणामः क्रिया परत्वापरत्वे च कालस्य"(त०५—२२)॥तथा—जीवा नाणदंसणलक्खणा॥ ज्ञानं साकारोपयोगो ज्ञानपञ्चकाज्ञानत्रयभेदभिन्नः, सामान्यविशेषात्मके वस्तुनि विशेषांशग्राही परिच्छेद इतियावत्। दर्शनं निराकारोपयोगश्चक्षुर्दर्शनादिभेदभिन्नः सामान्यांशग्राही परिच्छेदः, तदुभयलक्षणा जीवाः॥ अथ षण्णामपि द्रव्याणां द्रव्यार्थप्रदेशार्थतया संख्यामाह—धम्मा धम्मागासाणि दव्वट्ठयाए एक्किक्काणि॥ द्रव्यमेवार्थो द्रव्यार्थस्तस्य भावो द्रव्यार्थता तया द्रव्यार्थतया द्रव्यत्वेनेत्यर्थः। धर्म्माधर्म्माकाशानि प्रत्येकमेकैकं द्रव्यमित्यर्थः॥ तथा—पुग्गला अद्धासमया जीवा य अणंता॥ स्पष्टम्। नवरं अद्धाशब्दः कालवचनः समयशब्दस्य सङ्केतादिवाचकत्वापोहायोपादीयते। अद्धा कालस्तद्रूपाः समया अद्धासमयाः। पूर्वापरकोटिविप्रमुक्तसर्वसूक्ष्मकालांशस्वरूपाः। अतीतानागतानां तेषामानन्त्यात्। न च वक्तव्यं अतीतवर्त्स्यतो विनष्टानुत्पन्नतयाऽवस्तुत्वमिति, निरन्वयविनाशस्य एकान्तासत उत्पादस्य च प्रमाणबाधितत्वात्॥ तथा—पएसट्ठयाए धम्माधम्माणं एगजीवस्स य लोगागासतुल्ला असंखा पएसा॥ प्रकृष्टो निरंशो देशः प्रदेशः स चासावर्थश्च प्रदेशार्थस्तद्भावस्तत्ता तया निर्विभागभागत्वेनेत्यर्थः। धर्म्माधर्म्मास्तिकाययोरेकजीवस्य च प्रदेशाः प्रत्येकं लोकाकाशतुल्याः अत एवासंख्याः।

[illegible] लोकाकाशस्य प्रदेशास्तावन्त एवास्तीत्यर्थः। तत्र धर्माधर्मौ कृत्स्नं लोकं व्याप्यैवावस्थितौ। एकजीवस्य तु [illegible] लोकाकाशप्रमाणा प्रदेशाः। तत्र स्वप्रदेशसङ्कोचादेको जीवोऽङ्गुलासंख्येयभागमात्रे सूक्ष्मनिगोदेऽप्यवतिष्ठते। स्वप्रदेशविस्तरेण तु केवलिसमुद्घातावस्थायां कृत्स्नं लोकं व्याप्नोति॥ तथा—आगासस्स अणंता॥ आकाशं हि लोकेऽलोके च [illegible]पूर्णस्याकाशस्य लोकत्वात्, शेषस्यालोकत्वात्। अलोकाकाशं चानन्तम्॥ तथा—पुग्गलाणं परमाणुखंधाणं संखिज्जा असंखिज्जा अणंता य॥ इयमत्र भावना—इह लोकेऽनन्तानां पुद्गलानां चत्वारो राशयः। [illegible] परमाणूनामेको राशिः। द्व्यणुकत्र्यणुकादीनामुत्कृष्टसंख्याताणुकान्तानां स्कन्धानां सर्वेषामपि [illegible] द्वितीयो राशिः। जघन्यासंख्याताणुकादीनामेकाद्येकोत्तरगुणवृद्धानामुत्कृष्टासंख्याताणुका[illegible] सर्वेषामपि असंख्याताणुकस्कन्धप्रदेशभाजां तृतीयो राशिः। जघन्यानन्ताणुकादीनामेकाद्येकोत्तरगुणवृद्धानामुत्कृष्टा[illegible] सर्वेषामपि अनन्ताणुकस्कन्धप्रदेशभाजां चतुर्थो राशिः। यदाह—"अणु १ संखिज्जपएसिय २ असंख ३-[illegible] ४ चेव। चउरो खिअ रासी पोग्गलाण लोए अणंताणं॥ १॥" ततश्च परमाणूनां प्रदेशान्तराभावेनाप्रदेश-[illegible] महत्तमाणुकादिगतानां यथाक्रमं संख्येया असंख्येया अनन्ताश्च प्रदेशाः, एषां च परमाण्वादीनां पुद्गल-[illegible] द्रव्यार्थसंख्यास्वरूपं सूत्रोक्तस्वरूपप्रकरणेषु द्रष्टव्या—"सव्वथोवा अणंतपएसिया खंधा दव्वट्ठयाए, ते चेव [illegible] अणंतगुणा। परमाणुपुग्गला दव्वट्ठयाए पएसट्ठयाए अणंतगुणा। संखिज्जपएसिया खंधा दव्वट्ठयाए संखिज्जगुणा, ते चेव पएसट्ठयाए संखिज्जगुणा। असंखिज्जपएसिया खंधा दव्वट्ठयाए असंखिज्जगुणा, ते चेव पएसट्ठयाए असंख-

गुणत्ति"। अथ प्रसङ्गतो धर्म्माधर्म्मास्तिकायादीनां द्रव्यार्थप्रदेशार्थतया अन्योन्यमल्पबहुत्वं दर्श्यते—धर्म्माधर्म्माकाशानि द्रव्यार्थतया स्तोकानि, एकैकसंख्यत्वात्। तेभ्यो धर्म्माधर्म्मौ प्रदेशार्थतया संख्येयगुणौ, परस्परं तु तुल्यौ, द्वयोरपि लोकाकाशतुल्यप्रदेशत्वात्। ततो जीवा द्रव्यार्थतया अनन्तगुणाः। एकैकस्मिन्नपि हि निगोदे धर्म्माधर्म्मप्रदेशेभ्यो जीवानामनन्तगुणत्वम्, किं पुनः समग्राणाम्?। त एव प्रदेशतोऽसंख्यगुणाः, एकैकस्य जीवस्यासंख्यप्रदेशात्मकत्वात्। ततः पुद्गला द्रव्यतोऽनन्तगुणाः, एकैकस्यापि जीवप्रदेशस्यानन्तानन्तैः कर्म्मपुद्गलस्कन्धद्रव्यैरावेष्टितत्वात्। त एव प्रदेशतोऽसंख्यगुणाः। ततोऽप्यद्धासमया अनन्तगुणाः, एकैकस्यापि परमाण्वादिद्रव्यस्य अन्यान्यद्रव्यक्षेत्रकालभावसंयोगैरनन्तानामतीतानां भाविनां च समयानां भावात्। ततोऽपि लोकालोकाकाशप्रदेशा अनन्तगुणाः। एतदर्थसूचकं ग्रन्थान्तरे गाथाद्वयं यथा—"धम्माधम्मागासा, इक्किक्का दव्वयाइ ते थोवा। धम्माधम्मा य समा, पएसओ ते असंखगुणा॥ १॥ जीवा दव्वाणंता, ते चेव पएसओ असंखगुणा। पुग्गलदव्वाणंता, पएसओ ते असंखगुणा॥ २॥ अद्धासमयाणंता, नहप्पएसा तओ अणंतगुणत्ति"॥ इह चाद्धासमयानां प्रदेशचिन्ता न कृता, अप्रदेशत्वस्योक्तत्वात्॥ साम्प्रतं षण्णामपि द्रव्याणामवगाहमानमाह—धम्माधम्मा कसिणे लोगे चिट्ठंति॥ सुबोधम्। नवरं कृत्स्ने सम्पूर्णे॥ आगासं लोगे अलोगेऽवि॥ गतार्थम्॥ जोइसिअगइकिरिआकए काले माणुसलोगे॥ ज्योतिष्कगतिक्रियाकृतः समयावलिकामुहूर्त्तादिकः। कालो मनुष्यलोके, तत्परतो ज्योतिष्काणामवस्थितत्वात्। यदाह—"मेरुप्रदक्षिणानित्यगतयो नृलोके" "तत्कृतः कालविभागः" "बहिरवस्थिताः" इति(त० ४-१४-१५-१६) अनेन व्यावहारिककालावगाहः प्रतिपादितः। मुख्यकालस्तु

[illegible] लोकव्यापी ज्ञातव्यः। न च कालस्य मुख्यव्यावहारिकत्वमप्रतीतम्। यदाह—"लोकाकाशप्रदेश-स्था [illegible] कालाणवस्तु ये। भावानां परिवर्त्ताय, मुख्यः कालः स उच्यते ॥१॥ ज्योतिःशास्त्रे यस्य मानमुच्यते समयादि-कम्। स व्यावहारिकः कालः, कालवेदिभिरामतः ॥ २ ॥" इति ॥ तथा—पुग्गला जीवा य सव्वलोगे ॥ पुद्गलाः परमाणुद्व्यणुकादयो जीवाश्च सूक्ष्मपृथ्वीकायिकादयः सर्वस्मिंल्लोके तिष्ठन्ति। नानापुद्गलान्नानाजीवांश्चाश्रित्योक्तमिदम् ॥

अथ पुद्गलानां जीवानां च प्रत्येकं प्रतिनियतमवगाहमाह—एगाइपएसावगाहिणो पुग्गला, लोगासंखिज्जभागाइ-अवगाहिणो जीवा ॥ एकादिप्रदेशावगाहिनः पुद्गलाः। तत्र परमाणव एकप्रदेशावगाहिन एव, बादरपरिणामस्याप्ये-[illegible] न परमाणोर्द्व्यादिप्रदेशावगाहाभावात्। द्व्यणुकादयस्त्वसंख्येयाणुकान्तः स्कन्धाः प्रत्येकं जघन्यत एकस्मिन् [illegible]। उत्कृष्टतस्तु यत्र यावन्तोऽणवः स तावत्सु प्रदेशेषु। अनन्ताणुकस्तु स्कन्धो जघन्यत एकस्मिन् प्रदेशे, [illegible]संख्येयेषु, न त्वनन्तेषु, सकलस्यापि लोकस्यासंख्येयप्रदेशात्मकत्वात्। ननु युक्तं तावदमूर्त्तयोर्धर्माधर्मयो-[illegible] इति। मूर्त्तानां तु पुद्गलानामेकैकस्मिन्नप्याकाशप्रदेशेऽनन्तानन्तानां परमाणुद्व्यणुकत्र्यणुकादिपुद्गलानामव-[illegible] दृश्यते, तत्कथं?, उच्यते—अवगाहनस्वभावत्वात्सूक्ष्मपरिणामाच्च मूर्त्तिमतामप्यवगाहो न विरुध्यते, एकापवरकेऽने-[illegible]वत्, आगमप्रामाण्याच्चेत्यलम्। तथा लोकस्यासंख्येयो भागो लोकासंख्येयभागः, स आदिर्येषां द्वित्र्या-[illegible]भागानां तेष्ववगाहनशीला जीवाः। अयं भावः—लोकस्यैकस्मिन्नसंख्येये भागे एको जीवोऽवतिष्ठते। [illegible]षु, यावत्सकललोकव्याप्यावतिष्ठते। केवलिनः समुद्घातगतस्य चतुर्थसमये सर्वलोकव्याप्तेरिति। इह

धाजीवाधिकारे धर्मास्तिकायस्य लक्षणप्रमाणादि भणितं तत्तद्द्रव्यभणनप्रस्तावात् ॥ सांप्रतमजीवपञ्चकस्य प्रतिभेदा-नाह—एए चिअ धम्माइआ पंच अजीवा सपडिभेआ चउद्दस हवंति। तंजहा—धम्माधम्मागासाणं दव्व १ देस २ पदेस ३ रूवणाए तिण्णि तिण्णि भेआ एवं नव, दसमे काले, पुग्गलाणं च खंध १ देस २ पएस ३ परमाणु ४ लक्खणा चउरो भेआ ॥ इदमत्र तात्पर्यम्—धर्मास्तिकायद्रव्यं १ धर्मास्तिकायदेशाः २ धर्मास्तिकायप्रदेशाः ३ इति त्रयो भेदा धर्मास्तिकायस्य। तत्र संपूर्णो धर्मास्तिकायो द्रव्यम् १, तस्यैव द्रव्यस्य बुद्धिपरिकल्पिता अर्द्धत्रिचतुर्भागादिका अंशा देशाः २, तस्यैव द्रव्यस्य प्रकृष्टा निर्विभागा देशाः प्रदेशाः ३, एवमधर्मास्तिकायाकाशास्तिकाययोरपि त्रयस्त्रयो भेदा वाच्याः। एवं नव भेदा अजीवानाम्। दशमः कालः। वर्तमानसमयरूपस्यैव तस्य सत्त्वान्न देशादिकल्पना। तथा पुद्गलानां स्कन्धादयश्चत्वारो भेदाः। तत्र स्कन्दन्ति शुष्यन्ति धीयन्ते च पोष्यन्ते पुद्गलानां विघटनेन घटनेन चेति स्कन्धाः, द्व्यणुकादयोऽनन्ताणुकपर्यवसानाः। देशास्तेषामेव द्वित्रिभागादयोऽंशाः। प्रदेशास्तेषामेव निर्विभागा भागाः। परमाणवः स्कन्धाप्रतिबद्धनिर्विभागद्रव्यरूपाः। प्रदेशानां परमाणूनां च निर्विभागभागरूपत्वाविशेषेऽपि स्कन्धभावपरिणतापरिणतत्वकृतो विशेषः ॥

॥ इति समयसारटीकायामजीवतत्त्वनिरूपणो नाम द्वितीयोऽध्यायः ॥ २ ॥

## ।। साम्प्रतमास्रवतत्त्वं व्याख्यायते ।।

सुभासुभकम्मोयादाणनिदाणं आसवे ।। शुभं सद्वेद्यादि, अशुभमसद्वेद्यादि, शुभाशुभस्य कर्म्मण उपादाने ग्रहणे यन्निदानं कारणं स आस्रवः । आस्रूयते कर्म्मानेनेति । तद्भेदप्रतिपादनार्थमाह—से बायालीसविहे पण्णत्ते । तंजहा—पंच इंदिआणि, चउरो कसाया, पंच अव्वयाणि, तिण्णि जोगा, पणवीसं किरिआओत्ति ।।स्पष्टम्।। इन्द्रियादीनामेव व्यक्तिमाह—तत्थ इंदिआणि फरिसणाईणि ।। इन्द्र आत्मा तस्य लिङ्गं तेन दृष्टं सृष्टं चेत्यादिव्युत्पत्त्या निपातनादिन्द्रियशब्दसिद्धिः । इन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि स्पर्शादिगोचराणि । तथा—कसाया कोहाइआ ।। कष इति हिंसार्थो धातुः । कष्यन्ते प्राणिनोऽस्मिन्ननेनेति वा कषः संसारः कर्म्म वा, तस्य आयो लाभो येभ्यस्ते कषायाः क्रोधमानमायालोभाः । तथा—अव्वयाणि हिंसाईणि ।। अव्रतानि हिंसामृषावादादत्तादानमैथुनपरिग्रहलक्षणानि । तथा—जोगा मणवयणकायाणं वावारा ।। योगा मनोवाक्कायानां व्यापाराः । अयं भावः—आत्मना शरीरवता सर्वप्रदेशैर्गृहीता मनोयोग्याः पुद्गला मनस्त्वेन परिणमताश्चिन्ताप्रवर्त्तका मनः । एवं भाषापुद्गला भाषापरिणामापन्ना वचनम् । कायः शरीरमौदारिकादि, तत्सम्बन्धादात्मनो वीर्यविशेषः क्रमेण मनोयोगो वचनयोगः काययोगश्च । तथा—किरिआओ जहा—काइआ १ अहिगरणिआ २ पाओसिआ ३ पारितावणिआ ४ पाणाइवाइआ ५ आरंभिआ ६ पारिग्गहिआ ७ मायावत्तिया ८ मिच्छादंसणवत्तिया ९ अप्पच्चक्खाणकिरिआ १० दिट्ठिआ ११ पुट्ठिआ १२ पाडुच्चिआ १३ सामन्तोवणिवाइआ १४ नेसत्थिआ १५ साहत्थिआ १६ आणवणिआ १७

येआरम्भिआ १८ अणाभोगवत्तिआ १९ अणवकंखवत्तिआ २० पओगकिरिआ २१ समुदाणकिरिआ २. पेज्जवत्तिया २३ दोसवत्तिया २४ इरियावहिआ २५ य ॥ क्रियाः, यथेति क्रियावक्तव्यतारम्भसूचकं वाक्यम् । काये-नायतमानेन निर्वृत्ता कायिकी । सा चाविरतस्यानुपरतकायिकी, प्रमत्तसाधोरनुपयुक्तकायिकी च १ । अधिकरणं खड्गा-दिनिर्वर्त्तनं खड्गादिषु मुष्ट्यादीनां संयोजनं वा तेन निर्वृत्ता आधिकरणिकी २ । जीवाजीवविषयप्रद्वेषकरणात्प्राद्वे-षिकी ३ । पुत्रकलत्रादिवियोगदुःखभरातिपीडितस्यात्मनः स्वपरहस्ताभ्यां ताडनशिरःस्फोटनादिना क्रोधावेशात् परस्य वा पुत्रशिष्यकलत्रादेस्ताडनादिना पारितापनिकी ४ । निर्वेदात्स्वर्गाद्यर्थं वा गिरिपतनजलज्वलनप्रवेशादिना स्वपि-पर्ययेण क्रोधलोभाद्यावेशात्परविपर्ययेण च प्राणातिपातेन प्राणातिपातिकी ५ ।-जीवाजीवविपर्ययेण आरम्भेणारम्भिकी ६ । जीवाजीवविपर्ययेण परिग्रहेण पारिग्रहिकी ७ । परवञ्चनान्मायाप्रत्यया ८ । जिनवचनाश्रद्धाननिबन्धना मिथ्यादर्शन-प्रत्यया ९ । संयमविघातिनः प्रत्याख्येयान् कषायादीनप्रत्याचक्षाणस्याप्रत्याख्यानक्रिया १० । जीवाजीवानाम-श्वादीनां कुतूहलाद्दर्शनेन दृष्टिका । दर्शनं दृष्टं तद्विद्यते यस्यामित्यत्रादित्वान्मत्वर्थीये अप्रत्यये के च रूपमिदम् ११ । रागाद्युपाद्वा जीवाजीवस्वरूपप्रश्नेन पृष्टिका । प्राग्वद्रूपसिद्धिः । रागादिना योषिदादितूलगुणधानादि जीवाजीवस्पर्श-नेन स्पृष्टिकेति वा १२ । जीवाजीवौ प्रतीत्य कर्म्मबन्धेन प्रातीत्यिकी १३ । गवाश्वादिकं कश्चिद्द्रष्टुं समन्तादुपनिपतन्तं ...लोक्य हृष्यतः सामन्तोपनिपातिकी । प्रमत्तसंयतानां भक्तपानाद्यनाच्छादिते सम्पातिमसत्त्वानां ...जीवानां मनुष्यादीनामजीवानां पाषाणादीनां यन्त्रैर्निसर्जनेन नैसृष्टिकी १५ ।

स्वहस्तेन जीवाजीवताडनात्स्वाहस्तिकी १६ । जीवाजीवयोराज्ञापनेन आनायनेन वा आज्ञापनिकी आनायनिकी वा १७ । जीवाजीवयोर्विदारणाद्वैदारणिकी, भाषाद्वयाभिज्ञस्य जीवाजीवविक्रये एकं विप्रतारयतो वञ्चयमानस्य वैतारणिकीति वा १८ । अप्रत्यवेक्षिताप्रमार्जिते देशे शरीरोपकरणनिक्षेपादनाभोगप्रत्यया १९ । इहलोकपरलोकविरुद्धानि सेवमानस्यानवकाङ्क्षप्रत्यया २० । मनोवचनकायप्रयोगानां सावद्यानां करणेन प्रयोगक्रिया २१ । अष्टविधकर्म्मपुद्गलसमादानात्समादानक्रिया । समादीयते येन विषयस्तत्समादानमिन्द्रियं तस्य देशोपघातकारिणी सर्वोपघातकारिणी वा समादानक्रिया २२ । मायालोभनिश्रिता प्रेमप्रत्यया, रागोत्पादकवचनव्याहरणाद्वा २३ । क्रोधमाननिश्रिता द्वेषप्रत्यया २४ । अकषायिणामुपशान्तमोहादीनां चक्षुर्निमेषोन्मेषमात्रमपि यावद्विसमयस्थितिकः केवलकाययोगप्रत्ययो बन्ध ऐर्यापथिकी २५ । इति पञ्चविंशतिः क्रियाः । एते इन्द्रियादयो द्विचत्वारिंशदास्रवा अष्टानामपि कर्मणां साधारणत्वेनोक्ताः ॥ विशेषेण तु ज्ञानावरणादिनिश्रया प्ररूपयितुकामः प्राह—एवं सामन्नेणं परूविआ आसवा । एण्हिं विसेसेणं नाणावरणाइनिस्साए परूविज्जंति ॥ गतार्थम् । नवरं 'एण्हिंति' इदानीम् ॥ तानेवाह—तंजहा—नाणदंसणविसया पओसनिण्हवमच्छरंतरायासायणोवघाया नाणदंसणावरणाणं आसवा ॥ ज्ञानदर्शनविषयाः प्रदोषादयो ज्ञानदर्शनावरणयोरास्रवा भवन्ति । तत्र ज्ञानस्य मत्यादेर्ज्ञानिनां साध्वादीनां ज्ञानसाधनस्य पुस्तकादेः केनचिद्गुणसङ्कीर्त्तने कृतेऽनभिव्याहरतो व्याहरतो वाऽन्तः पैशुन्यं प्रदोषः, कोपप्रधानोऽयम् । नास्ति तन्मम श्रुतं न जाने [illegible] तस्य मया तत्समीपेऽधीतमित्यादिर्ज्ञानापह्नवो निह्नवः । मानोदयाविष्टचित्तः स्वस्यैव ख्यातिमीप्सुर्दानार्हमपि ज्ञानं यतोऽन्यस्मै न

ददाति स मत्सरः । स्वख्यातिपूजालाभार्थित्वेन पुस्तकाद्यपहारविकथादिकरणात्परस्य ज्ञानाधिगमगोचर त मवन्धन-
पूजालाभविषयं वा विघ्नविधानमन्तरायः । लोभोदयनिबन्धनोऽयम् । आयो ज्ञानादिलाभः शातयतेऽनयेत्याशातना क्रोध-
व्यामिश्रसमोहचुलः परिणामो निन्दास्वभाव आत्मनः, गुर्वादीनामवज्ञानमित्यर्थः । चित्राभिरुपपत्तिभिर्ज्ञानस्य ज्ञानिनां
ज्ञानसाधनानां च दूषणमुपघातः । किमनेनाधीतेन क्लेशप्रायेण ?, किं वा चेत्ययम् ?, कथं क्षयोपशमजस्य ज्ञानस्य पुस्तका-
दिसाधनम् ? इत्यादि । एवं दर्शने चक्षुर्दर्शनादौ सामान्यमात्रोपयोगरूपे दर्शनिषु साध्वादिषु दर्शनसाधने श्रोत्रनयननासि-
कादौ सम्मत्यनेकान्तजयपताकादिप्रमाणशास्त्रपुस्तकादौ वा प्रदोषादयो दर्शनावरणस्याश्रवा वाच्याः ॥ उपलक्षणत्वाच्चान्येऽपि
प्राणातिपातादयः ॥ अथ वेदनीयस्य द्विभेदत्वात्सद्वेद्यस्याश्रवानाह—देवपूआगुरुभत्तिसरागसंजमदेससंजमगत्त-
दाणदयाखमाबालतवअकामनिज्जराओ सायवेअणीअस्स ॥ सुबोधम् । नवरं रञ्जनाद्रागः संज्वलनलोभादिक-
रायः, तत्सहचारी सरागः तस्य संयमः सावद्ययोगोपरमलक्षणः सरागसंयमः । देशसंयमो देशेन विरतिरूपः । बालतपो
मिथ्यादर्शनोपेतम् । अकामनिर्जरा क्षुत्तृष्णावधबन्धचारकरोधादिनाऽनभिलषितं कर्मनिर्जरणम् । अथासद्वेद्यस्याह—
दुक्खसोगतावअक्कंदणवहपरिदेवणाणि सपरोभयत्थाणि असायवेअणीअस्स ॥ दुःखादीनि स्वपरोभयस्थान्य-
सातवेदनीयस्याश्रवाः । तत्र इष्टवियोगादेरसद्वेद्योदयापेक्षः पीडालक्षणः परिणामो दुःखम् । अनुग्राहकसम्बन्धविच्छेदे
...विशेषः शोकः । परिवादपरुषवचनादेरुत्पन्नः कलुषान्तःकरणस्य तीव्रानुशयपरिणामस्तापः । परितापसंयुक्ताश्रु-
...पाति ॥

निपाताङ्गविकारप्रचुरविलापाभिव्यक्तमाक्रन्दनम् । प्राणिप्राणवियोजनं वधः कशाद्यभिघातश्च । संक्लेशप्रवणं स्वपरानुग्रहाभिलाषविषयमनुकम्पाप्रचुरं परिदेवनम् । शोकादीनां दुःखजातीयत्वेऽपि पृथगभिधानं दुःखविशेषासंख्येयत्वसूचनार्थम् । एतानि क्रोधाद्यावेशवशादात्मस्थान्यपि भवन्ति, परस्थान्युभयस्थानि चेति । केशलुञ्चनानशनादीनि त्वार्हतैरास्थीयमानानि तेषु च प्रतिपाद्यमानानि अन्तरङ्गक्रोधाद्यावेशपूर्वकत्वाभावान्नासद्वेद्यस्यास्रवाः ॥ सम्प्रति दर्शनमोहचारित्रमोहभेदाद्विविधस्य मोहस्य क्रमादास्रवानाह—जिणसुअसंघदेवधम्मावण्णवायउम्मग्गदेसणमग्गनासणाणि दंसणमोहस्स ॥ जिना वीतरागाः । श्रुतमाचाराद्यागमः । सङ्घः प्रतीतः । देवाश्चतुर्निकायाः । धर्मः श्रमणधर्मादिः । एषामवर्णवादोऽसद्भूतदोषोद्भावनम् ॥ शेषं सुबोधम् ॥ कसाओदयाओ तिव्वे परिणामे चारित्तमोहस्स ॥ कषायाणामुदयो विपाकस्तस्मात्तीव्रः परिणामः कषायनोकषायभेदेन द्विविधस्यापि चारित्रमोहस्यास्रवः । तत्र स्वपरकषायोत्पादनसाधुजनगर्हाधर्मविप्रकरणादिः कषायमोहनीयस्यास्रवः । बहुप्रलापहास्यशीलतादिर्हास्यस्य । विचित्रक्रीडनासक्तिदेशादिदर्शनौत्सुक्यप्रमुखो रतेः । असूयापापशीलत्वादिररतेः । स्वपरशोकोत्पादनरोदनादिः शोकस्य । स्वभयपरिणामपरभापनादिर्भयस्य । सदाचारजुगुप्सापरपरिवादादिर्जुगुप्सायाः । वक्रत्वमृषावादासूयाविषयगार्ध्यादिः स्त्रीवेदस्य । स्वदारसन्तोषमन्दकषायत्वसरलत्वादिः पुंवेदस्य । तीव्रकामताचण्डकषायत्वेन्द्रियव्यपरोपणादिर्नपुंसकवेदस्येति ॥ अधुनाऽऽयुश्चतुष्कस्यास्रवानाह—पंचिंदिअवहमंसाहारबहुआरंभपरिग्गहा नेरइआउअस्स । अट्टज्झाणससल्लत्तगूढचित्तत्ताणि तिरिआउअस्स । अप्पारंभपरिग्गहत्तमद्दवअज्जवमज्झिमपरिणामा मणुआउअस्स । सरागसंजमदेससंजमअकामनिज्जराबालत-

यक्कह्माणमिस्समंजोगसम्मत्ताणि देवाउअस्स ॥ स्पष्टम् ॥ नवरं सशल्यत्वं मूलगुणोत्तरगुणेष्वतिचारसम्भवेऽनालोचिता-
प्रतिक्रान्तत्वं गूढचित्तत्वमुदायिनृपमारकादिवद्दुर्लक्ष्याभिप्रायत्वम् । मध्यमपरिणामो नातिनिकृष्टो नात्युत्कृष्टोऽध्यव-
सायविशेषः ॥ नाम्नः शुभस्याशुभस्य चाश्रवानाह—सरलत्तसंसारभीरुत्तसाहम्मिअभत्तिगमाओ सुहनामस्स ।
विवरीआ असुहनामस्स ॥ निगदसिद्धम् ॥ अथ तीर्थकरनाम्नः शुभनामान्तर्गतत्वेऽपि विशिष्टत्वाद्विशेषेणाश्रवा-
नाह—अरिहंतवच्छल्लाई वीसं आसवा तित्थयरनामस्स ॥ अर्हत् १ सिद्ध २ सङ्घ ३ गुरु ४ स्थविर ५ बहुश्रुत ६-
तपस्विषु ७ बहुमानसद्भूतगुणोत्कीर्तनतदनुरूपोपचारलक्षणं वात्सल्यम् । तथाऽभीक्ष्णं ज्ञानोपयोगः ८ । सम्यक्त्वविशुद्धिः ९ ।
विनयोपेतत्वं १० । आवश्यकापरिहाणिः ११ । शीलव्रतेष्वनतिचारः, तत्र शीलान्युत्तरगुणा व्रतानि मूलगुणाः १२ । क्षणलवा-
दिषु निरन्तरं संवेगभावना १३ । यथाशक्तितपः १४ । द्रव्यभावभिन्नस्त्यागः । द्रव्यत्यागोऽप्रायोग्याणामाहारोपधिशय्या-
दीनां परित्यागः । प्रायोग्याणां च यतिभ्यो दानम् । भावत्यागः क्रोधादीनां व्युत्सर्गो ज्ञानादीनां च यतिभ्यो वितरणं
१५ । आचार्यादीनां भक्तपानादिसम्पादनस्वरूपं वैयावृत्त्यं १६ । तेषामेव कार्यकरणद्वारेण स्वस्थतापादनं समाधिः १७ ।
अपूर्वज्ञानग्रहणं १८ । श्रुतभक्तिः १९ । प्रवचने प्रभावना २० । चेति । प्रथमान्तिमार्हद्भ्यामेते विंशतिरप्याश्रवाः स्पृष्टाः ।
मध्यमैस्तु जिनैरेको द्वौ त्रयः सर्वे वा । एतदर्थसूचकम् 'अरहन्तसिद्धपवयण' इत्यादिगाथाचतुष्कं सुप्रतीतत्वान्न लि-
ख्यते ॥ अथ शुभाशुभगोत्रस्याश्रवानाह—भयरहिअत्ताविणीअत्तगुणचंतपसंसाओ उच्चगोअस्स, विवरीआ नीअ-
गोअस्स ॥ स्पष्टम् ॥ अन्तरायस्याश्रवानाह—जिणपूआविग्घकरणहिंसाईआ विग्घस्स ॥ कण्ठ्यम् । आदिशब्दा-

ज्ञानादिविघ्नकरणादयः । दिङ्मात्रं चैतदाश्रवाणाम् । शास्त्रान्तरेभ्यः स्वबुद्ध्या च सर्वे यथोचितमन्येऽप्यास्रवा वाच्याः । नन्वेते प्रतिकर्म प्रतिनियता आस्रवा भणिताः, न च प्रतिनियतस्यैव कर्मणो बन्धः, सिद्धान्तेऽष्टविधादेर्बन्धप्रकारस्य भणनात् । यत उक्तम्—"जावणं एस जीवे एअइ वेअइ चलइ फंदइ घट्टइ खुब्भइ उदीरइ तं तं भावं परिणमइ,ताव णं अट्ठविहबंधए वा, सत्तविहबंधए वा, छव्विहबंधए वा, एगविहबंधए वा नो चेव णं अबंधए सिआ" तत्किमिदं न विरुध्यते !, न विरुध्यते, स्थित्यनुभागबन्धापेक्षया प्रतिनियताश्रवभणनात् । प्रकृतिप्रदेशबन्धापेक्षया तु प्रदोषादयः सर्वेऽपि सर्वकर्मणामास्रवा भवन्तीति ॥ एतदेवाह—एए अ पइकम्मं पडिनिअया आसवा ठिइअणुभागबंधाविक्खाए विण्णेआ । पगइपएसबंधाविक्खाए पुण अविसेसेणं सव्वेवि सव्वकम्माणं आसवा भवंति ॥ उक्तार्थम् ॥ अत्र हेतुमाह जओ सिद्धंते अट्ठविहे सत्तविहे छव्विहे एगविहे वा बंधे भणिए, नो पुण पडिनिअयस्स कम्मस्स बंधे ॥ सुबोधम् ॥ एतदेव गुणस्थानाश्रयेण भावयति—तत्थ मिच्छद्दिट्ठिपभिईणं अपमत्तंताणं मीसवज्जाणं आउबंधे अट्ठविहे, अन्नहा सत्तविहे ॥ इदमत्र हृदयम्—मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तानामायुर्बन्धेऽष्टानां मूलप्रकृतीनां बन्धादष्टविधो बन्धः, अन्यथा सप्तविधः । आयुर्बन्धो हि भवत्रिभागादौ कदाचिदेवान्तर्मुहूर्त्तिकः ॥ तथा—मिस्सनियट्टिअनिअट्टियायराणं सत्तविहे ॥ मिश्रस्य तथास्वभावान्निवृत्त्यनिवृत्तिबादरयोरतिविशुद्धत्वादायुर्बन्धाभावः ॥ सुहुमसंपरायस्स मोहाउवज्जे छव्विहे ॥ स्पष्टम् ॥ उवसंतमोहाईणं तिण्हं

१ "वभावात्" इत्यपि । २ "स्पष्टम्" इत्यपि पाठः ॥

मागस्स चिअ बंधाओ एगविहे ॥ उपशान्तमोहादयस्त्रयः सातं वेद्यं बध्नन्ति । एकस्मात् बन्धहेत्वभावाच्च बन्धः ।
अजोगिकेवली अबंधगो ॥ योगस्यापि बन्धहेतोरभावादबन्धकः ॥

इति समयसारटीकायामास्रवतत्त्वनिरूपणो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

॥ अथ बन्धतत्त्वं प्रतन्यते ॥

मिच्छादंसणअविरइपमायकसायजोगेहिं बंधहेऊहिं जीवस्स कम्मपुग्गलाणं सिलेसे बंधे ॥ मिथ्यादर्शनमाभिग्रहिकानाभिग्रहिकाभिनिवेशिकसांशयिकानाभोगिकभेदैः पञ्चधा । अविरतिः षट्कायवधमनःकरणानियमनभेदैर्द्वादशधा । प्रमादोऽज्ञान १ संशय २ विपर्यय ३ राग ४ द्वेष ५ स्मृतिभ्रंश ६ योगदुष्प्रणिधान ७ धर्मानादर ८ लक्षणोऽष्टविकल्पः । षोडशकषायनवनोकषायभेदाः कषायाः पञ्चविंशतिः । सत्य १ मृषा २ मिश्रा ३ सत्यामृषा ४ लक्षणश्चतुर्भेदो मनोयोगः । तादृक्चतुर्भेदो वचोयोगः । औदारिकौ १ दारिकमिश्र २ वैक्रिय ३ वैक्रियमिश्र ४ आहारका ५ऽऽहारकमिश्र ६ कार्मण ७ लक्षणसप्तभेदः काययोगः । इति पञ्चदशविधो योगः । इत्येते बन्धहेतवः । यद्वाचकमुख्यः—"मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः" (तत्त्वा० ८–१) इति, तत्र मिथ्यादृष्टेः पञ्चापि समुदिता भवन्ति । सासादनादित्रये मिथ्यादर्शनवर्जाश्चत्वारः । देशविरतस्याविरतिर्विरतिमिश्रा प्रमादकषाययोगाश्च । प्रमत्तस्य प्रमादकषाययोगाः । अप्रमत्तादीनां चतुर्णां कषाययोगौ । उपशान्तमोहादीनां त्रयाणां केवलो योग एव । अयोगिकेवलिनस्तस्याप्यभावः । ततश्च मिथ्यादर्श-

नादिभिर्बन्धहेतुभिर्जीवस्याञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरं पुद्गलनिचिते लोके कर्मयोग्यवर्गणापुद्गलानां यः श्लेषः स्वप्रदेशैः सह सम्बन्धः स बन्धः ॥ स च बन्धः प्रकृत्यादिभेदाच्चतुर्विध इत्याह—से चउव्विहे पण्णत्ते । तंजहा—पगइबंधे १ ठिइबंधे २ अणुभागबंधे ३ पएसबंधे ४ अ ॥ स्थित्यनुभागप्रदेशबन्धानां समुदितानां यः स्वभावः स प्रकृतिबन्धः । अध्यवसायविशेषगृहीतस्य कर्मदलिकस्य यत्स्थितिकालनियमनं स स्थितिबन्धः । कर्म्मपुद्गलानामेव शुभोऽशुभो वा घात्यघाती वा यो रसः सोऽनुभागबन्धः । कर्म्मपुद्गलानामेव यद्ग्रहणं स्थितिरसनिरपेक्षं दलिकसंख्याप्राधान्येनैव करोति, स प्रदेशबन्धः । उक्तं च—"प्रकृतिः समुदायः स्यात्स्थितिः कालावधारणम् । अनुभागो रसः प्रोक्तः, प्रदेशो दलसञ्चयः ॥ १ ॥" इह च मोदकदृष्टान्तः पूर्वाचार्यैर्दर्शितः । तद्यथा—यथा मोदकस्य यथासंभवं प्रकृतिर्वाताद्यपहारिणी, स्थितिरेकद्वित्रिदिनादिका, रसः स्निग्धमधुरादिरूप एकगुणद्विगुणादिः, प्रदेशाः कणिकादिरूपाः प्रसृत्यादिप्रमाणाः । एवं कर्म्मणोऽपि यथायोगं, प्रकृतिर्ज्ञानाच्छादनादिरूपा, स्थितिस्त्रिंशत्सागरोपमकोटीकोट्यादिरूपा, रस एकस्थानद्विस्थानादिः, प्रदेशा अल्पबहुबहुतरबहुतमादिरूपा इति ॥ अथ प्रकृतिबन्धस्वरूपमाह—तत्थ नाणावरणदंसणावरणवेयणिज्जमोहआउनामगोत्तंतरायाणं नाणच्छायणाई जे सहावे सा पगई ॥ ज्ञानावरणादीनां ज्ञानाच्छादनादिर्यः स्वभावः सा प्रकृतिः । तत्र ज्ञानावरणस्यार्थानवगमः, दर्शनावरणस्यार्थादर्शनं, वेदनीयस्य सुखदुःखसंवेदनं, मोहनीयस्य तत्त्वार्थाश्रद्धानं संयमघातश्च, आयुषो भवधारणं, नाम्नो नारकादिनामकरणं, गोत्रस्योच्चैर्नीचैःस्थानसंशब्दनं, अन्तरायस्य दानादिविघ्नकरणमिति । एष मूलप्रकृतिबन्धः साक्षान्निर्दिष्टः । उत्तरप्रकृतिबन्धे त्वष्टपञ्चाशदधिकशतसंख्या उत्तरप्रकृतयो

वाच्याः । ताश्च विस्तरभयात्सूत्रे न निर्दिष्टाः । [redacted] तु पुरो वक्ष्यमाणानां शुभाशुभप्रकृतीनां सुखप्रतिपत्त्यै संक्षेपात्सा अप्युच्यन्ते. तथाहि—ज्ञानावरणं पञ्चधा, दर्शनावरणं नवधा, वेदनीयं द्विधा, मोहनीयमष्टाविंशतिधा, आयुश्चतुर्द्धा, नाम त्र्युत्तरशतभेदं, गोत्रं द्विधा, अन्तरायं पञ्चधेति । तत्राद्यस्य मतिश्रुतावधिमनःपर्यायकेवलाख्यस्य ज्ञानस्य पञ्चविधत्वात्तदावरणमपि पञ्चधा मतिज्ञानावरणादि । तथा चक्षुरचक्षुरवधिकेवलभेदाच्चतुर्विधस्य दर्शनस्य आवरणं चक्षुर्दर्शनावरणादि चतुर्द्धा, निद्रा १ निद्रानिद्रा २ प्रचला ३ प्रचलाप्रचला ४ स्त्यानर्द्धिसंज्ञाः ५ पञ्च निद्राश्चेति नवधा दर्शनावरणम् । सातमसातं चेति द्विधा वेदनीयम् । तथाऽनन्तानुबन्ध्यप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्वलनभेदात् प्रत्येकं चतुर्विधाः क्रोधमानमायालोभाः । तत्र यावज्जीवानुगामिनोऽनन्तभवानुबन्धित्वादनन्तानुबन्धिनः । संवत्सरानुगामिनो नञोऽल्पार्थत्वादल्पमपि देशविरतिलक्षणं प्रत्याख्यानमावृण्वन्तीत्यप्रत्याख्यानावरणाः । मासचतुष्टयानुबन्धिनः प्रत्याख्यानं सर्वविरत्याख्यमावृण्वन्तीति प्रत्याख्यानावरणाः । पक्षानुबन्धिनः सम्‌शब्दस्येषदर्थत्वात्परीषहोपसर्गादिसम्पाते चारित्रिणमपीषज्ज्वलयन्तीति संज्वलनाः, इति षोडश कषायाः । नव च नोकषायाः । नोशब्दः साहचर्यवाची । एषां हि केवलानां न प्राधान्यम्, किन्तु कषायैः सहोदयं यान्ति,कषायानुद्दीपयन्ति वा। उक्तं च—"कषायसहवर्तित्वात्, कषायप्रेरणादपि । हास्यादिनवकस्योक्ता, नोकषायकषायता ॥१॥" ते च स्त्रीपुंनपुंसकवेदहास्यरत्यरतिशोकभयजुगुप्साख्याः । इति पञ्चविंशतिभेदाच्चारित्रमोहनीयस्य, मिथ्यात्वमिश्रसम्यक्त्वरूपात्त्रयश्च दर्शनमोहनीयस्येत्यष्टाविंशतिधा मोहनीयम् । नारकतिर्यङ्नरामरभवेष्ववस्थितिकारणमायुश्चतुर्द्धा । तथा नामकर्म मूलभेदैर्द्विचत्वारिंशद्विधम् । तथाहि—गति १ जाति २-

शरीरा ३ऽङ्गोपाङ्ग ४ बन्धन ५ सङ्घातन ६ संहनन ७ संस्थान ८ वर्ण ९ गन्ध १० रस ११ स्पर्शा १२ ऽनुपूर्वी १३ विहायोगति १४ लक्षणाश्चतुर्दश पिण्डप्रकृतयः । पराघातो १ऽद्योता २ऽऽतपो ३ च्छ्वासा ४ ऽगुरुलघु ५ तीर्थकर ६ निर्माणो ७-पघाताख्या ८ अष्टौ प्रत्येकप्रकृतयः । त्रस १ बादर २ पर्याप्तक ३ प्रत्येक ४ स्थिर ५ शुभ ६ सुभग ७ सुस्वरा ८ऽऽदेय ९-यशःकीर्ति १० स्वरूपं त्रसदशकम् । स्थावर १ सूक्ष्मा २ ऽपर्याप्तक ३ साधारणा ४ ऽस्थिरा ५ ऽशुभ ६ दुर्भग ७-दुःस्वरा ८ ऽनादेया ९ ऽयशःकीर्त्ति १० स्वरूपं स्थावरदशकं चेति । अथ पिण्डप्रकृतीनां प्रभेदाः प्रदर्श्यन्ते—गतिनाम नरकतिर्यङ्नरसुराश्रयेण चतुर्द्धा । जातिनाम एकेन्द्रियादिभेदात्पञ्चधा । शरीरनाम औदारिकवैक्रियाहारकतैजसकार्मणभेदात्पञ्चधा । अङ्गोपाङ्गनाम औदारिकवैक्रियाहारकद्वारेण त्रिधा । बन्धननाम निबद्धबध्यमानपुद्गलसम्बन्धविधानरूपं औदारिकाद्यभिलापेन पञ्चधा । सङ्घातननाम पुद्गलसङ्घातनरूपं तथैव पञ्चधा । संहनननाम अस्थिरचनाविशेषरूपं, वज्रर्षभनाराच १ ऋषभनाराच २ नाराचा ३ ऽर्द्धनाराच ४ कीलिका ५ सेवार्त्त ६ भेदात्षोढा । संस्थाननाम अवयवरचनात्मकशरीराकृतिस्वरूपं, समचतुरस्र १ न्यग्रोधपरिमण्डल २ सादि ३ वामन ४ कुब्ज ५ हुण्ड ६ भेदात्षोढा । वर्णनाम कृष्णनीललोहितहारिद्रसितभेदात्पञ्चधा । गन्धनाम सुरभि १ दुरभि २ भेदाद्द्वेधा । रसनाम तिक्तकटुकषायाम्लमधुरभेदात्पञ्चधा । स्पर्शनाम गुरु १ लघु २ मृदु ३ खर ४ शीतो ५ ष्ण ६ स्निग्ध ७ रूक्ष ८ भेदादष्टधा । आनुपूर्वीनाम द्विसमयादिना विग्रहेण भवान्तरं गच्छतो जन्तोरनुश्रेणिनियतगमनपरिपाटिवेद्यं नरकगत्याद्याश्रयेण चतुर्द्धा । विहायोगतिनाम पादादिविहरणात्मकदेशान्तरप्राप्तिहेतुगतिलक्षणं वृषोष्ट्रादीनामिव प्रशस्ताप्रशस्तभेदाद्द्वेधा । एवं चतुर्दशपिण्डप्रकृतीनामवान्तर-

प्रकृतयः सर्वाः पञ्चषष्टिः, पराघाताद्यष्ट॰ शत्युपेता नाम्न अनव .३ च ते । यदा न्धनानि ८७

प्रकृतयः सर्वाः पञ्चषष्टिः, पराघाताद्यष्ट॰ ... यदा ... बन्धनानि तु
विवक्षा तदा त्र्युत्तरं शतम् । बन्धनपञ्चदशकं त्वेवम्—औदारिक॰ क्रियाहारकाणां स्वनाम्ना तैजसेन कार्मणेन तैजसका॰
र्मणाभ्यां च योगे प्रत्येकं चत्वारि चत्वारि बन्धनानि । तद्यथा—औदारिकौदारिक १ औदारिकतैजस २ औदारिककार्मण ३
औदारिकतैजसकार्मणा ४ ख्यानि चत्वारि । एवं वैक्रियवैक्रियादीनि चत्वारि । आहारकाहारकादीनि चत्वारि । तथा
तैजसतैजस १ तैजसकार्मण २ कार्मणकार्मणा ३ ख्यानि त्रीणीति । यदा तु बन्धनसङ्घातननाम्नी शरीरपञ्चकान्तर्भूत-
त्वान्न पृथग्विवक्ष्येते, वर्णगन्धरसस्पर्शा अप्यविवक्षितभेदाः सामान्येन चत्वार एव गृह्यन्ते, तदा गत्यादीनामुत्तरभेदा
एकोनचत्वारिंशत्संख्याः स्युः, ते च पराघाताद्यष्टाविंशतिप्रकृतियुक्ताः बन्धोदयोपयोगिनः सप्तषष्टिर्नाम्नो भेदा भवन्ति ।
पराघातादिप्रकृतीनामर्थलेशो लिख्यते—यदुदयात्प्राणी परेषां बलिनामपि दुष्प्रधृष्यस्तत्पराघातनाम । यदुदयाज्जीवशरीरं
ग्वनिर्दयोत्तरवैक्रियचन्द्रग्रहनक्षत्रताराद्यौषधिमण्यादिवदनुष्णप्रकाशात्मकोद्योतकृत्तदुद्योतनाम । यदुदयाज्जीवदेहमारम-
नाऽनुष्णमपि उष्णप्रकाशरूपातपकृत्तदातपनाम । तदुदयश्च सूर्यबिम्बादिपार्थिवशरीरेष्वेव न वह्न्यादिषु । यदुदयादुच्छ्व-
सनलब्धिस्तदुच्छ्वासनाम । यदुदयादङ्गं न लघु नापि गुरु तदगुरुलघुनाम । यदुदयाज्जगत्पूज्यो धर्मतीर्थकर्त्ता तत्तीर्थकर-
नाम । यदुदयाज्जन्तुदेहेष्वङ्गप्रत्यङ्गानां नियतस्थानवृत्तिता तत्सूत्रधारकल्पं निर्माणनाम । यदुदयात्स्वदेहावयवैरेव प्रति-
जिह्वादिभिर्जन्तुरुपहन्यते तदुपघातनाम । तथा यदुदयाद्द्वीन्द्रियादिपर्यायप्राप्तिस्तत्त्रसनाम । यदुदयाज्जीवा बादरा भवन्ति,
तद्बादरनाम । बादरत्वं चेह चक्षुर्ग्राह्यत्वं नेष्टं, बादरस्याप्येकैकस्य पृथिव्यादिशरीरस्य चक्षुर्ग्राह्यत्वाभावात्, तस्माज्जीव-

विपाकित्वेन जीवस्यैव विशिष्टस्वरपरिणामं जनयत्येनत्त पुद्गलेषु । केवलं जीवविपाक्यप्येतच्छरीरपुद्गलेष्वपि काञ्चिदभिव्यक्तिं दर्शयति, तेन बादराणां बहुतरसमुदितपृथिव्यादीनां चक्षुषा ग्रहणं न सूक्ष्माणामिति । यदुदयाज्जीवानां स्वाः स्वाः पर्याप्तयः पर्याप्तनाम । यदुदयादेकस्य जीवस्यैकं शरीरं न त्वनन्तानामप्येकं तत्प्रत्येकनाम । यदुदयाद्दन्तास्थ्यादीनां स्थिरता तत्स्थिरनाम । यदुदयान्नाभेरुपरि शिरःप्रभृतीनां शुभता तच्छुभनाम । यदुदयात्सर्वेषां प्रियस्तत्सुभगनाम । यदुदयान्मधुरगम्भीरोदारस्वरस्तत्सुस्वरनाम । यदुदयादुपादेयवाक्यस्तदादेयनाम । यदुदयात्सामान्यतस्तपःशौर्यत्यागाद्यर्जितया ख्यात्या ख्यापनं यशःकीर्त्तिः । यद्वा—"दानपुण्यकृता कीर्त्तिः, पराक्रमकृतं यशः" इत्यादिलक्षणे यशःकीर्ती भवतस्तद्यशःकीर्तिनाम । स्थावरदशकं त्रसदशकवैपरीत्येन भावनीयमिति नामकर्मविचारसंक्षेपः । गोत्रमुच्चनीचभेदाद्द्विधा । अन्तरायं दानलाभभोगोपभोगवीर्यविषयं पञ्चभेदमुत्तरप्रकृतयः । इह च बन्धे विंशत्युत्तरं प्रकृतिशतमधिक्रियते । यतो वर्णादयश्चतस्र एव, सिद्धान्तपुद्गलानामेव तथा परिणामभावेन सम्यक्त्वमिश्रयोर्बन्धाभावात् । नाम्नश्च पूर्वोक्ता समर्थदर्शिन । स्थापना ॥ [illegible] इत्युक्तः प्रकृतिबन्धः, अधुना स्थितिबन्धस्वरूपमाह—

ठिई बन्धइत्तिभणत्तं कालनियमणं जहा—नाणदंसणावरणवेअणिअंतरायाणं उक्कोसा ठिई पत्तेअं तीसं ॥ २१ ॥
सागरोवमकोडाकोडीओ, मत्तरी मोहस्स, वीसं नामगोआणं, आउस्स पुण तित्तीसं सागरोवमाणि ॥
स्यद् ॥ नवरं सागरोपमकोटीकोट्य इति ससतिविंशतिचन्द्योरपि योज्यते ॥ उत्कृष्टां स्थितिमुक्त्वा जघन्यामाह—

मयस्थितिकैव । यतस्तत्कर्म प्रथमे समये बद्धं द्वितीये वेदितं तृतीयेऽकर्मतामनुभवति । तथा नामगोत्रयोरष्टौ मुहूर्ताः । शेषाणां ज्ञानावरणदर्शनावरणमोहायुरन्तरायाणामन्तर्मुहूर्त्तम् । एवमुक्ता मूलप्रकृतीनामुत्कृष्टा जघन्या च स्थितिः । उत्तरप्रकृतीनां तु ग्रन्थान्तराज्ज्ञेया, ग्रन्थगौरवभयादिह नोच्यते ॥ सम्प्रति कर्मस्थितेर्बन्धप्रत्ययप्ररूपणां करोति—सुहुम-सुहाणं सुरनरतिरिआउवज्जाणं सव्वाणं कम्मपयडीणं जिट्ठठिई अइसंकिलेसेण बज्झइ जहन्ना विसोहीए त्ति ॥ प्रकृतीनां शुभाशुभत्वं वक्ष्यते, सर्वासां शुभानामशुभानां च सुरनरतिर्यगायुर्वर्जानां कर्मप्रकृतीनां ज्येष्ठा स्थितिः अतिसंक्लेशेनात्यन्ततीव्रकषायोदयरूपेण बध्यते, जीवैरिति शेषः । जघन्या स्थितिर्विशुद्ध्या कषायापचयरूपया । इदमुक्तं भवति—सर्वासां शुभाशुभप्रकृतीनां स्थितयः संक्लेशवृद्धौ वर्द्धन्ते, तदपचये च हीयन्ते । ततो ये ये विवक्षितमूलोत्तरप्रकृतीनां बन्धकास्तेषां मध्ये यो यः सर्वोत्कृष्टविशुद्धियुक्तः स स तत्तद्विवक्षितकर्मस्थितिं जघन्यां बध्नाति, अत्यन्ततीव्रकषायोदयवांस्तूत्कृष्टाम् । सुरनरतिर्यगायुषां तूत्कृष्टानि स्थितिर्विशुद्ध्यैव बध्यते । इतिशब्दः स्थितिबन्धसमाप्तौ ॥ इदानीमनुभागबन्धं व्याचिख्यासुरनुभागस्यैकार्थशब्दानाह—अणुभागे अणुभावे विवागे रसेत्ति एगट्ठा ॥ अनु पश्चाद्बन्धोत्तरकालं भज्यते सेव्यत इत्यनुभागः, अनुभूयत इत्यनुभावः, विशेषेण विविधं वा पच्यते विपाकः, रस्यते विपाकानुभवनेनास्वाद्यते रसः, इत्येकार्थाः शब्दा घटकुटकुम्भकलशादिवत् ॥ अथ शुभाशुभप्रकृतिसम्बन्धितया सरसो

निरवद्विधुवत्त द्विविध इतिहेतोः शुभाशुभप्रकृतयः प्ररूपणीया इति मनसिकृत्य प्राह—से असुहाणं पयडीणं निंयव्व असुहे, सुहाणं उच्चुव्व सुहेत्ति । पयडीणं सुहासुहविभागे परूविज्जइ ॥ गतार्थम् ॥ शुभप्रकृतीराह—सायवेअणीअं सुरनरतिरिआणं आउआइं। उचगोअं । सत्तत्तीसं नामपयडीओ । तंजहा—मणुआणं गई १ आणुपुव्वी अ २, देवाणं गई ३ आणुपुव्वी अ ४, पंचिंदिअजाई ५, ओरालिआईणि पंच सरीराणि १०, आइल्लाणं तिण्हं तिण्णि अंगोवंगाणि १३, पढमं संहणणं १४, पढमं संठाणं १५, सुहा वण्ण १६ गंध १७ रस १८ फासा १९, सुहविहगगई २०, अगुरुलहु २१ पराघाय २२ ऊसासा २३ यवु २४ उज्जोअ २५ निम्माण २६ तित्थयराणि २७, तसदसगं च ३७, एआओ सुहाओ बायालीसं पुण्णपयडीउत्ति रुद्धाओ ॥ एताः सद्वेद्यादयः प्रकृतिबन्धाधिकारे किञ्चिन्निरूपितस्वरूपाः शुभाः प्रशस्ता द्विचत्वारिंशत्पुण्यप्रकृतय इति रूढाः ॥ अथाशुभप्रकृतीराह—पंच नाणावरणाणि, नव दंसणावरणाणि, मिस्ससम्मत्ताणं बंधाभावाओ छव्वीसभेए मोहे, पंच अंतरायाणि । एआओ पणयालीसं घाइचउक्कपयडीओ । असायवेअणीअं । नेरइआउअं । नीअगोअं । चउत्तीसं नाम पयडीओ । तंजहा—तिरिआणं गई १ आणुपुव्वी अ २, नेरइआणं गई ३ आणुपुव्वी अ ४, एगिंदिआईओ चउरो जाईओ ८, पढमवज्जाणि पंच संहणणाणि १३, पंच संठाणाणि अ १८, असुहा वण्णगंधरसफासा २२, असुहविहगगई २३, उवघायं २४, थावरदसगं च ३४ । एवं सव्वग्गेणं असुहाओ बासीइं पावपयडित्ति भण्णंति ॥ निगदसिद्धम् । ननु बन्धे विंशत्युत्तरं प्रकृतिशतमभिधियत इत्युक्तम्, एताश्च

शुभाशुभप्रकृतयः पिण्डिताश्चतुर्विंशतिशतसंख्याः स्युस्तदेतत्कथं?, उच्यते—"नीलकसिणं दुगंधं, तित्तं कडुअं गुरुं खरं रुक्खं। सीअं च असुभनवगं, एक्कारसगं सुभं सेसं ॥१॥" इति वचनाद्वर्णचतुष्कस्य शुभाशुभत्वेनोभयत्र ग्रहणादविरोधः । ततश्चाशुभप्रकृतीनां रसोऽशुभोऽशुभाध्यवसायनिष्पन्नत्वात् । शुभानां शुभः शुभाध्यवसायनिष्पन्नत्वादितिस्थितम् । अयं च शुभोऽशुभश्च रस एकद्वित्रिचतुःस्थानिकभेदाच्चतुर्विधः प्रवचने प्रतीतः । तथाहि—अशुभरसो निम्बादिरसेन शुभरसस्त्विक्ष्वादिरसेनोपमीयते । तत्र निम्बादीनां सहजोऽकथितः कटुको रस एकस्थानिक उच्यते । स एव भागद्वयप्रमाणः कथितो द्वितीयभागावशिष्टोऽर्द्धावर्त्तित इत्यर्थः । कटुकतरो द्विस्थानिकः । स एव भागत्रयप्रमाणः कथितस्तृतीयभागावशिष्टः, कटुकतमस्त्रिस्थानिकः । स एव भागचतुष्टयप्रमाणः कथितश्चतुर्थभागावशिष्टोऽतिकटुकतमश्चतुःस्थानिकः । एवमिक्ष्वादीनामपि सहजो मधुरो रस एकस्थानिकः । स एव द्वित्रिचतुर्भागप्रमाणः कथितो द्वितीयतृतीयचतुर्थभागावशिष्टः क्रमान्मधुरतरो मधुरतमोऽतिमधुरतमश्च द्विस्थानिकादिर्भण्यते । यथा चैवं तथा प्रकृतीनामप्यशुभानां तादृशतादृशकषायनिष्पाद्यः कटुकः कटुकतरः कटुकतमोऽतिकटुकतमश्च शुभानां मधुरो मधुरतरो मधुरतमोऽतिमधुरतमश्च रसो यथासंख्यमेकद्वित्रिचतुःस्थानिको ज्ञेय इत्येतच्चेतसि निधाय सूत्रमाह—निंबुच्छुपमुहाणं सहजे रसे एकठाणिए, से चिअ दुतिचउभागपमाणे कढिए एक्कभागावसेसे दुट्ठाणिआइए होइ एसा उवमा पयडिरसस्स भणिआ ॥ कथितार्थम् । एते चैकस्थानिकादयो रसा यथोत्तरमनन्तगुणवीर्या बोद्धव्याः ॥ सम्प्रति यैः प्रत्यये-

१ "ज्ञातव्याः" इत्यपि पाठः ॥

यासां प्रकृतीनां यत्स्वरूपो रसो बध्यते तत्स्वरूपमाह—पव्वयभूमिवालुआजलरेहातुल्लेहिं कसाएहिं असुहाणं जहाकमं चउतिदुइक्कट्ठाणिए रसे बज्झइ। सुहाणं तु वालुआजलरेहातुल्लेहिं चउट्ठाणिए। भूमिरेहातुल्लेहिं तिट्ठाणिए। पव्वयरेहातुल्लेहिं दुट्ठाणिए। एक्कट्ठाणिए नत्थि ॥ रेखा राजयः। रेखाशब्दस्य प्रत्येकं सम्बन्धात् पर्वतरेखाशब्देन प्रभूतकालव्यपदेशतोऽतितीव्रोदयत्वं कषायाणां प्रतिपाद्यते। ततश्च पर्वतरेखासदृशैः कषायैः सर्वासामशुभप्रकृतीनां चतुःस्थानिको रसो बध्यते। आतपशोषिततडागभूरेखातुल्यैर्मनाग्मन्दोदयैस्त्रिस्थानिकः। वालुकारेखाप्रख्यैर्मन्दोदयैर्द्विस्थानिकः। जलरेखासमानैरतिमन्दोदयैरेकस्थानिकः। शुभप्रकृतीनां तु वालुकाजलरेखातुल्यैश्चतुःस्थानिकः। भूरेखातुल्यैस्त्रिस्थानिकः। दृषद्रेखोपमैर्द्विस्थानिकः। एकस्थानिकस्तु रस एव नास्ति। यत एकस्थानिकरसबन्धोऽत्यन्तासंक्लिष्टस्य सम्भवति। तत्र च शुभप्रकृतयो बन्ध एव न समागच्छन्ति। या अपि वैक्रियतैजसकार्मणाद्याः शुभा नारकप्रायोग्याः संक्लिष्टोऽपि बध्नाति। तासामपि स्वभावात्सर्वसंक्लिष्टोऽपि द्विस्थानिकमेव रसं विदधाति। येषु तु मध्यमाध्यवसायस्थानेषु शुभा बध्यन्ते, तेषु तासां द्विस्थानिक त्रिस्थानिको वा रसो बध्यते, नैकस्थानिकः, मध्यमपरिणामत्वादेव, अतिविशुद्धौ चतुःस्थानिकस्यैव बन्ध इत्येकस्थानिकरसाभावः ॥ सम्प्रति यासां प्रकृतीनां चतुःस्थानिकादिश्चतुर्विधोऽपि रसो यासां चैकस्थानिकवर्जस्त्रिविध एव भवति तत्प्रपञ्चमाह—चउसंजलणपंचंतरायपुंवेअमइसुयओहिमणनाणचक्खुअचक्खुओहिदंसणावरणरूयाओ सतरसपयडीओ इगदुतिचउट्ठाणिअरसाओ सेसाओ सुहाओ असुहाओ अ दुतिचउट्ठाणिअरसाओ निद्दिट्ठाओ ॥ चत्वारः संज्वलनाः क्रोधादयः। पञ्चान्तरायाणि दानान्तरायादीनि। पुंवेदः। मतिश्रुतावधिमनःपर्ययज्ञाना-

एकस्थानिकादिभिश्चतुर्भि-
वरणानि । चक्षुरचक्षुरवधिदर्शनावरणानीत्येताः सप्तदश प्रकृतयः एकद्वित्रिचतुःस्थानिकरसाः । एकस्थानिको रसः प्राप्यते ।
रपि रसैर्युक्ता बध्यन्त इत्यर्थः । तत्रानिवृत्तिबादरे संख्येयेषु भागेषु गतेष्वासां सप्तदशानामप्येकस्थानिको रसः प्राप्यते ।
द्विस्थानिकादयस्तु रसास्त्रयोऽप्यासां संसारस्थान् जीवानाश्रित्य प्राप्यन्ते । शेषाः सर्वा अपि शुभा अशुभाश्च द्वित्रिचतुः-
स्थानिकरसा न त्वेकस्थानिकरसा निर्दिष्टाः कथिताः परमर्षिभिरिति गम्यते । इयमत्र भावना—अशुभानां यद्येकस्था-
निको रसो लभ्यते तदाऽनिवृत्तिबादरसंख्येयभागेभ्यः परत एव । तत्र च प्रागुक्ताः सप्तदश प्रकृतीर्विना शेषाणामशुभानां
बन्ध एव नास्त्यतः शेषाणामशुभानामेकस्थानिको रसो न भवति । ये अपि केवलज्ञानदर्शनावरणाभिधे द्वे प्रकृती तत्र
बध्येते, तयोरपि सर्वघातित्वाद्द्विस्थानिक एव रसो निर्वर्त्यते नैकस्थानिक इति । शुभानां तु सर्वासामप्येकस्थानिको रस
एव नास्तीत्युक्तमेव । यश्च शुभानां सहजेक्षुरसोपमो रसः प्रोक्तः, स द्विस्थानिकरसस्य सर्वजघन्यस्य स्पर्द्धक एव द्रष्टव्यः ॥
अनन्तरोक्तश्चैकस्थानिकादिः सर्वोऽपि रसस्तीव्रो मन्दश्च भवति, ततो येन प्रत्ययेन तस्य तीव्रत्वं येन च मन्दत्वं जायते
तदाह—संकिलेसेणं असुहाणं पगईणं तिव्वे रसे भवइ । विसोहीए मंदे । सुहाणं पुण विसोहीए तिव्वे । संकिले-
सेणं मंदे त्ति ॥ अक्षरार्थः स्पष्ट एव । रसानां तु तीव्रमन्दत्वस्वरूपमिदम्—इह घोषातकीपिचुमन्दाद्यशुभवनस्पतीनां सम्बन्धी
सहजोऽर्द्धावर्त्तो द्विभागावर्त्तो भागत्रयावर्त्तश्च यथासंख्यं कटुकः, कटुकतरः, कटुकतमोऽतिशय कटुकतमश्च । तथेक्षुक्षीरा-
दिद्रव्याणां सत्कः सहजोऽर्द्धावर्त्तो द्विभागावर्त्तो भागत्रयावर्त्तश्च यथाक्रमं मधुरो मधुरतरो मधुरतमोऽतिमधुरतमश्च रसो

१ "शेषस्थानिकास्तु रसा–" एवंभूतोऽपि पाठो दृश्यते ॥

जलादिसम्बन्धाद्यथा तीव्रो भवति, तथैतेषामेव पिचुमन्दादादीनां क्षीरादीनां च द्रव्याणां सम्बन्धी सहजो रसो जललवबिन्द्वर्द्धचुलुकचुलुकप्रसृत्यञ्जलिकरककुम्भद्रोणादिसम्बन्धाद्यथा बहुभेदं मन्दमन्दतरादित्वं प्रतिपद्यते, तथार्द्रावर्त्तादयोऽपि रसा यथा जललवादिसम्बन्धाद्बहुभेदं मन्दमन्दतरादित्वं प्रतिपद्यन्ते। तथैवाशुभप्रकृतीनां शुभप्रकृतीनां च रसास्तादृशताद्दनकषायवशात्तीव्रत्वं मन्दत्वं चानुविदधति। तत्रायमत्राशयः—अशुभप्रकृतिबन्धकानां मध्ये यो यः उत्कृष्टसंक्लेशो जन्तुः स स तीव्रं रसं बध्नाति, विशुद्ध्यमानपरिणामस्तु मन्दम् । शुभप्रकृतिबन्धकानां तु मध्ये यो यो विशुध्यमानपरिणामः स स तीव्रं संक्लिष्टस्तु मन्दमिति गतोऽनुभागबन्धः॥ इदानीं प्रदेशबन्धं विवक्षुः प्रदेशशब्दव्याप्यमाह—एएसा कम्मवग्गणादलिअसरूवा ॥ कर्मवर्गणाया यद्दलिकं तत्स्वरूपाः प्रदेशाः अत्राधिकृता इत्यर्थः। एकैकस्य कर्मवर्गणास्कन्धस्य अभव्यानन्तगुणप्रदेशात्मकत्वात् । अथ कर्मवर्गणेति किमुच्यते?, उच्यते, वर्गणा नाम सजातीयद्रव्यसमुदायः, सा चौदारिक १ वैक्रिया २ऽऽहारक ३ तैजस ४ भाषा ५ ऽऽनपान ६ मनः ७ कार्मणं ८ भेदभिन्ना प्रत्येकमग्रहणवर्गणान्तरिता ज्ञेयाः । तत्र सर्वस्मिँल्लोके एकाकिनां परमाणूनामनन्तानामपि सजातीयत्वादेका वर्गणा । द्व्यणुकानामप्येका । एवमेकैकाणुवृद्धा उत्कृष्टसंख्येयाणुकान्तानां स्कन्धानां संख्येयाः, संख्येयकस्य संख्येयभेदत्वात् । एवमसंख्येयाणुकानामसंख्येयाः, असंख्येयकस्यासंख्येयभेदत्वात् । अनन्ताणुकामनन्ताः, अनन्तकस्यानन्तभेदत्वात् । सर्वा अप्येता औदारिका ग्रहणमायोग्या उत्कृष्टाभव्यानन्तगुणसिद्धानन्तभागप्रमिताणुनिर्वृत्तैरनन्तैः स्कन्धैरारब्धा ग्रहणप्रायोग्या जघन्यौदारिकवर्गणा भवति।



१ "ताश्चौदारि—" इत्यपि । २ [illegible]

तत आरभ्यैकैकाणुवृद्ध्या स्वानन्तभागाधिकस्वरूपोत्कृष्टवर्गणान्ता अनन्ता औदारिकवर्गणाः स्युः । तत एकैकाणुवृद्ध-
मत्स्कन्धारब्धा अभव्यानन्तगुणा अग्रहणवर्गणाः । ततो यथोत्तरमेकैकाणुवृद्धिमत्स्कन्धाः अनन्ता वैक्रिययोग्यव-
र्गणाः । अनन्ता अग्रहणवर्गणाः । एवमाहारकादिवर्गणा अपि वाच्याः । सर्वत्रान्तरेऽग्रहणवर्गणा अभव्यानन्तगुणाः ।
स्वस्वजघन्याग्रहणवर्गणैकस्कन्धे ये परमाणवस्तेऽभव्यराशिप्रमाणेनानन्तकेन गुणिता यावन्तो भवन्ति, तावत्योऽन्त-
रालेऽग्रहणवर्गणा इत्यर्थः । पूर्वपूर्वतरवर्गणानां प्रभूततरपरमाणुत्वेनातिसूक्ष्मतया च उत्तरोत्तरवर्गणानामपि स्वल्पतर-
परमाणुत्वेन स्थूलतया चैता न ग्रहणयोग्या इत्यग्रहणवर्गणा उच्यन्ते । तथा स्वस्वजघन्यप्रायोग्यवर्गणानन्तभागाधिका
स्वस्वोत्कृष्टवर्गणा । अयमत्राशयः—औदारिकादीनां ग्रहणवर्गणानां यो यः स्वस्वजघन्यवर्गणास्कन्धः स एकैकाणुवृद्ध्या
वर्द्धमानः स्वस्यानन्ततमे भागे यावन्तोऽणवस्तावद्भिरधिकः सन्नुत्कृष्टो भवति । अत एव जघन्योत्कृष्टापान्तराल-
वर्तिन्यः सर्वत्रानन्ता ग्रहणप्रायोग्या वर्गणाः स्युः । औदारिकादिवर्गणानां चावगाहः क्रमाद्न्यूनो न्यूनतरो न्यूनतमोऽ-
ङ्गुलासंख्येयांश इति । कार्मणवर्गणोपरि ध्रुवाध्रुवाद्या वर्गणा इहानुपयोगित्वान्नोच्यन्ते, कार्मणवर्गणाया एवाधिकृ-
तत्वात् ॥ साम्प्रतं जीवो यादृशान् कर्मवर्गणास्कन्धानुपादत्ते तदभिधित्सुराह—इह खलु जीवे निअसव्वपएसेहिं
एगपएसोगाढं अभव्वाणंतगुणे कम्मवग्गे
सव्वजीवाणंतगुणरसच्छेओववेए ... इह संसारे खल्विति वाक्यालङ्कारे जीवः प्रतिसमयमभ-
...पाणंतगणपएसनिष्फन्ने ... इति चातुर्गतिके पारावार इवापारे
... "...वर्गणा" इत्यपि पाठः ॥

येभ्योऽनन्तगुणान् कर्मवर्गणास्कन्धान् गृह्णातीति सम्बन्धः। निजसर्वप्रदेशैरिति नैकेन न द्व्यादिभिर्वा किन्त्वात्मीयैः समस्तैः प्रदेशैः। तथा ह्येकस्य जीवस्य समस्तलोकाकाशप्रदेशप्रमाणाः प्रदेशा वर्त्तन्ते, मिथ्यात्वादिबन्धहेतूदये च सति ते सर्वे स्वस्वाकाशप्रदेशेभ्यो युगपदेव कर्मद्रव्यं गृह्णन्ति, परस्परं सर्वेऽप्युपकुर्वन्त्येकस्मिन् प्रदेशे चेष्टमाने सर्वेषामपि चेष्टनाच्छिविडसुवर्णशृङ्खलावत् परस्परसम्बद्धत्वादिति। कर्मवर्गणास्कन्धान् विशेषयन्नाह—अभव्यानन्तगुणप्रदेशनिष्पन्नान्, प्रत्येकमभव्येभ्योऽनन्तगुणैरुपलक्षणत्वात् सिद्धानन्तभागवर्त्तिभिः परमाणुभिर्निर्वृत्तान्। तथा सर्वजीवेभ्योऽनन्तगुणै रसच्छेदैरुपेतान् युक्तान् एकैकस्यापि कर्मस्कन्धपरमाणोः केवलिप्रज्ञया छिद्यमानस्य सर्वजीवानन्तगुणरसच्छेददायित्वात्। तथा एकप्रदेशावगाढान् येष्वाकाशप्रदेशेषु जीवोऽवगाढस्तत्रैवावगाढान् भिन्नदेशस्थानां ग्राह्यत्वपरिणामाभावात्। यथा हि दहनः स्वदेशस्थितान् प्रायोग्यपुद्गलानात्मभावेन परिणमयति। एवं जीवोऽपि स्वक्षेत्रस्थमेव द्रव्यमादत्ते, न बहिर्वर्त्तीति भावः। एतच्च कर्मस्कन्धदलिकं चतुःस्पर्शं द्विगन्धं पञ्चवर्णं पञ्चरसं च द्रष्टव्यम्॥ अथ गृहीतदलिकस्याष्टधाविभजनयुक्त्या जीवप्रदेशेषु सम्बन्धमाह—गिण्हित्ता तम्मज्झाओ थोवं दलिअं आउस्स, तओ विसेसाहिअं परोप्परं तुल्लं नामगोत्ताणं, तओ विसेसाहिअं परोप्परं तुल्लं नाणावरणदंसणावरणंतरायाणं, तओ विसेसाहियं मोहस्स, तओ विसेसाहिअं वेअणीअस्स, विभएत्ता निअपएसेसु खीरनीरनाएणं अग्गिलोहपिंडनाएणं वा संबंधेइ॥ अक्षरार्थः स्पष्टः। नवरं 'नाएणन्ति' ज्ञातेन दृष्टान्तेन। भावार्थस्त्वयम्—इहाष्टविधबन्धकेन जन्तुना यदेकेनाध्यवसायेन चित्रतागर्भेण गृहीतं दलिकं तस्याष्टौ भागा भवन्ति। तत्रैको ॥ २५ ॥

भागः शेषकर्मापेक्षयाऽल्पस्थितिकत्वादायुषः स्तोकः, ततो नामगोत्रयोर्विशेषाधिकः, परस्परं तु तुल्यस्तुल्यस्थितिकत्वात्। ननु स्थित्यनुसारेण भागो भवन्नायुषः सकाशान्नामगोत्रयोः संख्यातगुणः प्राप्नोति?, सत्यम्, किन्तु सर्वोऽपि नरकगत्यादिकर्मकलाप आयुष्कोदयमूलोऽत आयुष्कस्य प्रधानत्वाद्बहुपुद्गलद्रव्यलाभः। न चैवमप्रधानत्वान्नामगोत्रयोर्भागहीनता वाच्या, नामगोत्रे हि सततबन्धित्वाद्बहुद्रव्यं प्राप्नुतः, आयुष्कं तु कादाचित्कबन्धत्वादल्पद्रव्यमिति। तथा नामगोत्रभागाद्विशेषाधिको भागो ज्ञानावरणदर्शनावरणान्तरायाणां मिथस्तु तुल्यस्तुल्यस्थितिकत्वात्। ततो विशेषाधिको भागो मोहस्य। ननु स्थित्यनुरोधेन ज्ञानावरणाद्यपेक्षया मोहस्य संख्यातगुणो भागः प्राप्नोति विशेषाधिकः कथमुक्तः?, सत्यम्, दर्शनमोहलक्षणाया एकस्या एव मिथ्यात्वप्रकृतेः सप्ततिकोटीकोट्यः स्थितिरुक्ता। चारित्रमोहस्य तु कषायलक्षणस्य चत्वारिंशदेवातस्तदङ्गीकृत्य विशेषाधिक एव भागो युज्यते, न तु संख्यातगुणः। दर्शनमोहनीयद्रव्यं तु सर्वमेव सर्वघातित्वाच्चारित्रमोहनीयदलिकादनन्तभाग एव वर्तत इति न किञ्चित्तेन वर्धत इति। तथा मोहनीयभागाद्विशेषाऽधिको भागो वेदनीयस्य, स्थित्यनुसारेण मोहभागादस्य हीनताप्राप्तावपि स्तोके दलिके सति स्वभावात् सुखदुःखानुभवनलक्षणस्वकार्यव्यक्तीकारासामर्थ्याद्विशेषाधिकत्वमुक्तम्। अयमाशयः—सुखदुःखजननस्वभावं वेदनीयं तत्तयापरिणताश्च पुद्गलाः स्वभावात्प्रचुरा एव स्वकार्यं सुखदुःखरूपं व्यक्तीकर्तुमलम्। शेषकर्मपुद्गलास्तु स्वल्पा अपि स्वकार्यं जनयन्ति। दृश्यते च पुद्गलानां स्वकार्यजननेऽल्पबहुत्वकृतं सामर्थ्यवैचित्र्यम्। यथा गृष्यादेर्मृद्वीकादेश्च तृप्तिजनने। लड्डुकादेर्विषादेश्च मारणादिकार्ये इति। एकसमयगृहीतदलिकस्यैवमष्टधापरिणामे भागविकल्पनायां च जीवशक्तेरचि-

न्तरं पुद्गलपरिणामस्य विचित्रत्वं च हेतुः । इयमष्टविधबन्धकं प्रत्यष्टभागकल्पना ॥ सप्तषडेकविधबन्धकांस्तु प्रति सप्तभागादिकल्पना कार्येत्याह—एसा कम्मदलिअस्स अट्ठभागकप्पणा अट्ठविहबंधगेसु । सत्तविहाइबंधगेसु सत्तभागाइकप्पणा कायव्वा ॥ प्रकटार्थम् । अत्रापि स्थित्यनुसारेणोक्तयुक्त्या भागविशेषो वक्तव्यः । एवं मूलप्रकृतीराश्रित्य दर्शितो भागविशेषः । मूलप्रकृतिलब्धं च दलिकं बध्यमानानामुत्तरप्रकृतीनां यथास्वं विभज्यते, तथाहि—निजमूलप्रकृतिलब्धदलिकस्य यः सर्वघातिरसयुक्तोऽनन्तांशः स सर्वघातिनीनां भवति । शेषदलिकं तु देशघातिरसयुक्तं सर्वघात्यवशिष्टानां बध्यमानानां स्वोत्तरप्रकृतीनां विभक्तव्यम् । एतच्च प्रपञ्चतः शास्त्रान्तराद्द्रष्टव्यम् । उत्कृष्टप्रदेशबन्धोऽल्पतरप्रकृतिबन्धकस्योत्कटयोगिनः संज्ञिनः पर्याप्तस्य । जघन्यस्तु तद्विपरीतस्येत्यवसितः प्रदेशबन्धः ॥ अथ प्रकृत्यादिबन्धानां प्रधानहेतूपदेशं विधत्ते—पयडिपएसबंधाणं जोगा हेऊ । ठिइअणुभागबंधाणं कसाया ॥ प्रकृतिप्रदेशबन्धयोर्योगा हेतवः । योगा इति बहुवचनं योगस्थानानामसंख्येयत्वज्ञापनार्थम् । उपशान्तमोहादिगुणस्थानकत्रये शेषबन्धहेत्वभावेऽपि केवलयोगसद्भावे वेदनीयलक्षणा प्रकृतिस्तत्प्रदेशाश्च बध्यन्ते । अयोग्यवस्थायां तु योगाभावे न बध्यन्त इत्यन्वयव्यतिरेकाभ्यामनयोः प्राधान्येन योगहेतुकत्वम् । तथा स्थित्यनुभागबन्धयोः कषायाः कषायजनिताध्यवसायविशेषा हेतवः । अप्रमत्तादिषु मिथ्यात्वाविरतिप्रमादलक्षणबन्धहेत्वभावेऽपि कषायसद्भावे स्थित्यनुभागबन्धयोर्भावात्तदभावे तूपशान्तमोहादिष्वभावादनयोर्मुख्यतः कषायप्रत्ययत्वम् ॥ अथ प्रकारान्तरेण बन्धस्य चातुर्विध्यमभि-

१ "गदितार्थं" इत्यंशकोऽपि दृश्यते पाठः ॥

भने—पुट्ठ १ बद्ध २ निधत्त ३ निकाइअ ४ भेअभिन्ने वा चउव्विहे बंधे ॥ स्पृष्टादिभेदभिन्नो वा चतुर्विधो बन्धः । तत्र सूच्यग्रकलापवत् परस्परं कर्मप्रदेशानां सम्बन्धः स्पृष्टबन्धः । दवरकबद्धसूचिकासम्बन्धवद्बद्धबन्धः । वर्षा... लोहदवरकबद्धसूचिकासम्बन्धवन्निधत्तबन्धः । अग्निध्मानघनताडितैकपिण्डीभूतसूचिकासम्बन्धवन्निकाचितबन्धः ॥

॥ इति नवतत्त्वसारटीकायां बन्धतत्त्वनिरूपणो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## ॥ अथ संवरतत्त्वं विव्रियते ॥

आसवाणं निरोहे संवरे वज्जरे ॥ आस्रवाणां कर्मपुद्गलादानहेतूनां निरोधः संवरः प्रशस्तः ॥ तद्भेदानाह—से ... समिइगुत्तिपरीसहजइधम्मभावणाचरित्तेहिं कम्मपुग्गलादाणसंवरणाओ सत्तावन्नविहे भवइ ॥ स च ... सम्यगात्मगुणेषु ... इति संवरः । समितिरिति पञ्चानां चेष्टानां तान्त्रिकी संज्ञा । अथवा सं सम्यक् प्रशस्ताऽर्ह... प्रवचनानुसारेण इतिश्चेष्टा समितिः, सम्यक्प्रवृत्तिलक्षणा । गुप्तिर्योगनिग्रहः, सा तु प्रवृत्तिनिवृत्तिलक्षणा, सम्यक्... प्रविचाररूपप्रवीचारनिवृत्तिरूपेत्यर्थः । अत एव पठन्ति—"समिओ णिअमा गुत्तो, गुत्तो समिअत्तणंमि भइअवो । कुसलवयमुईरंतो जं वइगुत्तो अ समिओ अ ॥ १ ॥" इति । परीषहजयः—क्षुदादिपीडितत्वेऽपि धृतेरपरित्यागः । यति... ...धर्मः । चारित्रं सर्वसावद्ययोगविरतिरूपम् । एतैः कर्मपुद्गलादानहेतोराश्रवस्य संवरणात्संवर इति ॥ ... विवरणमाह—तत्र इरिआईओ समिईओ पञ्च ॥ ईर्यादयः ईर्यासमितिः १, भाषासमितिः २, एष-

षणासमितिः ३, आदाननिक्षेपसमितिः ४, परिष्ठापनासमितिरित्येताः पञ्च समितयो यथाक्रमं गमागम १ भाषणा २-
आहारग्रहण ३ वस्त्रपात्रादिग्रहणमोक्षणो ४ चारादिव्युत्सर्ग ५ विषयाः प्रतीताः ॥ तथा—जोगनिग्गहरूवाओ गुत्तीओ
तिण्णि ॥ मनोवाक्कायव्यापारा योगास्तन्निग्रहरूपास्तिस्रो गुप्तयो मनोगुप्त्यादयः ॥ तथा—खुहाइआ परीसहा बावी-
सं ॥ मार्गाच्यवनार्थं निर्जरार्थं [redacted] परि सामस्त्येन सह्यन्त इति परीषहाः । ते च द्वाविंशतिस्तद्यथा—क्षु १ पिपासा २-
शीतो ३ ष्ण ४ दंशमशक ५ नाग्न्या ६ ऽरति ७ स्त्री ८ चर्या ९ निषद्या १० शय्या ११ आक्रोश १२ वध १३ याचना-
१४ऽलाभ १५ रोग १६ तृणस्पर्श १७ मल १८ सत्कारपुरस्कार १९ प्रज्ञा २०ऽज्ञान २१ दर्शन २२ लक्षणाः । तत्र मार्गा-
च्यवनार्थं दर्शनप्रज्ञापरीषहौ । शेषा विंशतिर्निर्जरार्थम् । तेषां जयश्चैवम्—क्षुधार्त्तः शक्तिमान् साधुरेषणां नातिलङ्घ-
येत् । अदीनोऽविह्वलो विद्वान्, यात्रामात्रोद्यतश्चरेत् ॥ १ ॥ पिपासितः पथिस्थोऽपि, तत्त्वविद्दैन्यवर्जितः । न शीत-
मुदकं वाञ्छे–देषयेत्प्रासुकोदकम् ॥ २ ॥ बाध्यमानोऽपि शीतेन, त्यक्त्वत्राणवर्जितः । वासोऽकल्प्यं नाददीत, ज्वलनं
ज्वालयेत च ॥ ३ ॥ उष्णेन तप्तो नैवोष्णं, निन्देच्छायां च न स्मरेत् । वीजनं मज्जनं गात्रा—भिषेकादि च वर्जयेत्
॥ ४ ॥ दष्टोऽपि दंशमशकैः, सर्वाहारप्रियत्वचित् । त्रासं द्वेषं निरासं न, कुर्यात्कुर्यादुपेक्षणम् ॥ ५ ॥ नास्ति वासोऽशुभं चैत–
त्वचेलतां समाधु [redacted] । नाग्न्येन विशुद्धो जानन्, लाभालाभविचित्रताम् ॥ ६ ॥ न कदाप्यरतिं कुर्या–द्धर्मारामर-
तिर्यतिः । गच्छंस्तिष्ठन्नथासीनः, स्वास्थ्यमेव समाश्रयेत् ॥ ७ ॥ दुर्वारमन्नपङ्का हि, मोक्षद्वारार्गलाः स्त्रियः । चिन्तिता
धर्मनाशाय, चिन्तयेदिति नैव ताः ॥ ८ ॥ ग्रामाद्यनियतस्थायी, स्थानानन्यविवर्जितः । चर्यामेकोऽपि कुर्वीत, विवि-

धाभिमर्दयुतः ॥ ९ ॥ श्मशानादौ निषद्यायां, स्त्र्यादिकण्टकवर्जिते । इष्टानिष्टानुपसर्गा-स्तिरीहो निर्भयः सहेत् ॥ १० ॥
शुभाशुभायां शय्यायां, विसहेत सुखासुखे । रागद्वेषौ न कुर्वीत, प्रातस्त्याज्येतिचिन्तयन् ॥ ११ ॥ आक्रुष्टोऽपि हि
नाक्रोशे-त्क्षमाश्रमणतां विदन् । प्रत्युताक्रोष्टरि यति-श्चिन्तयेदुपकारिताम् ॥ १२ ॥ सहेत हन्यमानोऽपि, प्रतिहन्या-
न्मुनिर्न तु । जीवानाशात् क्रुधो दोषात्, क्षमया च गुणार्जनात् ॥ १३ ॥ नायाचितं यतीनां यत्, परदत्तोपजीवि-
नाम । याञ्चादुःखं प्रतीच्छेत्सच्छेत्पुनरगारिताम् ॥१४॥ परात्परार्थं स्वार्थं वा, लभेतान्नादिनापि वा । माद्येन्न लाभान्नाला-
भा-च्छिन्देत्यमथवा परम् ॥ १५ ॥ उद्विजेत न रोगेभ्यो, न च काङ्क्षेच्चिकित्सितम् । अदीनस्तु सहेद्देहा-दात्मनो
भेदमात्मनः ॥१६॥ अमूलाक्ष्याणुचेलत्वे, मंसूलेषु तृणादिषु । सहेत दुःखं तत्स्पर्श-भयमिच्छेन्न तान्मृदून् ॥१७॥ ग्रीष्मातप-
परिक्लिन्नाङ्गो मलादीनामलन्मुनिः । नोद्विजेत न सिस्नासे-न्नोद्वर्तयेत्सहेत तु ॥ १८ ॥ वत्थाने पूजने दाने, न भवेदभि-
लाषुकः । असत्कारे न दीनः स्यात्, सत्कारे स्यान्न हर्षवान् ॥ १९ ॥ प्रज्ञो प्रज्ञावतां पश्य-न्नात्मन्यप्रज्ञतां विदन् । न
विषीदेन्न वा माद्ये-त्प्रज्ञोत्कर्षमुपागतः ॥ २० ॥ ज्ञानचारित्रयुक्तोऽस्मि, छद्मस्थोऽहं तथापि हि । इत्यज्ञानं विषहेत,
ज्ञानस्य क्रमलाभवित् ॥२१॥ जिनास्तदुक्तं जीवो वा, धर्माधर्मौ भवान्तरम् । परोक्षत्वान्मृषा नैव, चिन्तयेत्सादर्शनः॥२२॥
नारीमानसानैव, स्वपरसंरक्षितान्मुनिः । परीषहान् सहेताभीत्र्यकायमनसां वशी ॥ २३ ॥ इति परीषहजयश्लोकाः शास्त्रा-
न्तरस्था मन्दमतीनामनुग्रहार्थमत्रोदाहृताः । एषु मध्ये प्रज्ञाज्ञानपरीषहौ ज्ञानावरणप्रभवौ । अलाभपरीषहोऽन्तरायो-
दयसमुत्थः । दर्शनपरीषहो दर्शनमोहनीयोदयजः । नाग्न्य १ ऽरति २ स्त्री ३ निषद्या ४ऽऽक्रोश ५ यांचना ६ सत्कार-

गुरस्कार ७ परीषहाश्चारित्रमोहनीयोदयलब्धजन्मानः। शेषा एकादश वेद्योदयनिबन्धनाः। तथाऽनिवृत्तिबादरसम्परायान्तेषु
नवसु गुणस्थानेषु सर्वे परीषहाः संभवन्ति। सूक्ष्मसम्परायोपशान्तमोहक्षीणमोहेषु मोहाभावात्तत्प्रतिबद्धपरीषहाष्टकवर्जाश्चतुर्दश।
सयोगायोगिकेवलिनोस्तु प्रतिबद्धा एकादश—"क्षुत्पिपासा च शीतोष्णे, दंशश्चर्या वधो मलः। शय्या रोगस्तृणस्पर्शो, जिने
वेद्यस्य संभवात्॥१॥" इतिवचनात्। तथा एकस्मिन्प्राणिन्युत्कर्षत एककालमेकोनविंशतिः परीषहाः प्राप्यन्ते, शीतोष्णयो-
श्चर्यानिषद्ययोश्च युगपदभावात् जघन्यतस्त्वेक इत्यलं विस्तरेण॥ तथा—खंतिप्पमुहे दसविहे जइधम्मे॥
खंती अ १ मद्दव २ अज्जव ३, मुत्ती ४ तव ५ संजमे अ ६ बोद्धव्वे। सच्चं ७ सोअं ८ आकिंचणं च ९
बंभं च १० जइधम्मो॥१॥" क्षान्तिः क्षमा। मार्दवममृदुत्वम्। आर्जवमकौटिल्यम्। मुक्तिर्निर्लोभता। तपोऽन-
शनादि। संयमः प्राणिदयारूपः, पृथिव्यादिविषयः सप्तदशभेदः। सत्यं मृषावादविरतिः। शौचं संयमं प्रति निरुपले-
पता। सा चादत्तादानत्यागरूपा। आकिञ्चन्यं निष्परिग्रहत्वम्। नवब्रह्मचर्यगुप्तिसनाथ उपस्थसंयमो ब्रह्म। अन्ये त्वेवं
पठन्ति—"खंती मुत्ती अज्जव, मद्दव तह लाघवे तवे चेव। संजम चिआगऽकिंचण, बोद्धव्वे बंभचेरे अ॥२॥" तत्र लाघवं
द्रव्यतोऽल्पोपधिता, भावतो गौरवपरिहारः। त्यागः सर्वसङ्गानां विमोचनं संयतेभ्यो वस्त्रादिदानं वा। शेषं प्राग्वत्॥
तथा—अणिच्चयाइआओ दुवालस भावणाओ॥ अनित्यतादिका द्वादश भावनाः, ताश्चेमाः—"भावयितव्यमनित्य-
त्वं १ मशरणं २ तथैकता ३ऽन्यत्वे ४। अशुचित्वं ५ संसारः ६, कर्माश्रव ७ संवरविधिश्च ८॥१॥ निर्जरण ९-
लोकविस्तर १० धर्मस्वाख्याततत्त्वचिन्ताश्च ११। बोधेः सुदुर्लभत्वं, च १२ भावना ...

पञ्चमोऽध्यायः॥

नेता एता इति न प्रारूयन्ते ॥ तथा—सामाइआइं पंच चारित्ताइं ॥ सामायिक १ च्छेदोपस्थापन २ परिहारविशुद्धि ३ सूक्ष्मसंपराय ४ यथाख्याताख्यानि पञ्च चारित्राणि । एतानि नवमेऽध्याये किञ्चिद्विचारयिष्यन्ते ॥

॥ इति समयसारटीकायां संवरतत्त्वनिरूपणो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## ॥ इदानीं निर्जरातत्त्वं निगद्यते ॥

अनुभवमाणं कम्मपुग्गलाणं परिसडणं निज्जरा ॥ उपभुक्तविपाकानां कर्मपुद्गलानां परिशटनमात्मप्रदेशेभ्यः पृथग्भवनं निर्जरा ॥ अथ तस्या भेदावाह—सा दुविहा पण्णत्ता, सकामा अकामा य ॥ सह कामेन निर्जरा मे भवत्वित्यभिलाषेण न त्विहलोकपरलोकादिकामेन युक्ता सकामा । अनन्तरोक्तकामवर्जिता त्वकामा । चशब्दः समुच्चये । स्वकालप्राप्ति या फलानामिव कर्मणां पाकस्य भावाभिर्जराया इदं द्वैविध्यमितिभावः ॥ तत्राकामा केषामित्याह—तत्थ अकामा सव्वजीवाणं ॥ निर्जराभिलाषिणां तपस्यमानानां सकामनिर्जरेति वक्ष्यमाणत्वात्तद्व्यतिरिक्तानां सर्वेषां जीवानामकामा । कर्मक्षयलक्षणाभिलाषवर्जितत्वात् ॥ एतदेव चतुर्गतिगतजन्तुषु व्यक्तीकुर्वन्नाह—तहाहि—एगिंदिआइआ तिरिआ जहासंभवं छेअभेअसीउण्हवासजलग्गिछुहापिवासाकसंकुसाईहिं, नारगा तिविहाए वेअणाए, मणुआ छुहापिवासावाहिदारिद्दचारगनिरोहाइणा, देवा पराभिओगकिब्बिसिअत्ताइणा असायवेअणीअं कम्ममणुभविउं परिसाडिंति त्ति तेसिं अकामनिज्जरा ॥ तथाहीति पूर्वोक्तस्यैवोपक्षेपे । छेदभे-

दशीतोष्णवर्षजलाग्निक्षुधापिपासाकसांकुशादय एकेन्द्रियादिषु पञ्चेन्द्रियपर्यन्ततिर्यक्षु यथायोगं योज्याः । नारकाणां त्रिविधा वेदना क्षेत्रजान्योऽन्योदीरितपरमाधामिकजनितस्वरूपा । 'वाहित्ति' व्याधिः । चारकनिरोधः कारागारग्रहः । शेषं सुबोधम् ॥ सकामनिर्जरामाह—सकामनिज्जरा पुण निज्जराहिलासीणं अणसण १ ओमोअरिआ २ भिक्खायरिआ ३ रसचाय ४ कायकिलेस ५ पडिसंलीणया ६ भेअं छव्विहं बाहिरं, पायच्छित्त १ विणय २ वेआवच्च ३-सज्झाय ४ झाण ५ विउस्सग्ग ६ भेअं छव्विहमब्भंतरं च तवं तवंताणं ॥ निर्जराऽभिलाषिणामनशनादिभेदं षड्विधं बाह्यं प्रायश्चित्तादिभेदं षड्विधमाभ्यन्तरं च तपस्तप्यमानानां सकामनिर्जरेति संटङ्कः । तपोभेदाः किञ्चिद्व्याख्यायन्ते—अनशनमाहारपरित्यागः, तच्च इत्वरं यावत्कथिकं च । इत्वरं परिमितकालं श्रीवीरतीर्थे नमस्कारसहितादिषण्मासान्तम् । यावत्कथिकं त्वाजन्मभावि, तत्पुनः पादपोपगमनेङ्गिनीभक्तपरिज्ञाभेदात्त्रेधा १ । अवमोदरिका द्रव्यत उपकरणभक्तपानविषयं न्यूनत्वम् , भावतः क्रोधादिपरित्यागः २ । भिक्षाचर्या वृत्तिसङ्क्षेपाऽपरनामिका द्रव्यादिभेदभिन्नगोचराभिग्रहस्वरूपा । तत्र द्रव्यतोऽभिग्रहो लेपकार्येव कुन्ताग्रादिस्थितं मण्डकादि वा ग्राह्यमित्यादिः । क्षेत्रत एकद्वित्र्यादिगृहस्वग्रामपेटार्द्धपेटादिलब्धं दायकेन देहलीं जङ्घयोरन्तर्विधाय वा दत्तं ग्रहीष्यामीत्यादिः । कालतः पूर्वाह्णादौ सकलभिक्षाचरनिवर्त्तनावसरे वा पर्यटितव्यमित्यादिः । भावतो हसनगानरोदनादिक्रियाप्रवृत्तो बद्धो वा यदि दास्यति तदा-

१ "यथासंभवं संबन्धनीयाः" इत्यपि । २ "–र्जरेत्यक्षरार्थः । द्वादशविधं तु तपः किञ्चिद्व्याख्यायते—तत्राऽ" इत्यत एवं रूपोऽपि पाठ. ॥ ३ "–रूपता" इत्यपि ॥

...दुग्धादीनां च त्यागो वर्जनं रसत्यागः ४ । ...मतुलोपाद्विशिष्टरसवतां वृष्याणां विकारहेतूनामत एव विकृतिशब्दवाच्यान
दिना च विविक्तः ५ । प्रतिसंलीनता गुप्तता, सा चेन्द्रियकषाययोगविषया विविक्तशयनासनता चेति चतुर्धा ६ । एत-
मोदा बाह्यं नरः । बाह्यत्वं च बाह्यद्रव्याद्यपेक्षत्वात्प्रायो बहिः शरीरस्य तापकृत्त्वात्परप्रत्यक्षत्वात् कुतीर्थिकैर्गृहस्थैश्च
कायन्वाच । अथाऽभ्यन्तरं तपः—चित्तं जीवो भण्यते, ततः प्रायो बाहुल्येन चित्तं जीवं विशोधयतीति प्रायश्चित्तमनु-
ष्ठानविशेषः । तच—"आलोअण १ पडिक्कमणे २, मीस ३ विवेगे ४ तहा विउस्सग्गे ५ । तव ६ छेअ ७ मूल ८ अणव-
ट्ठया य ९ पारंचिए १० चेव ॥१॥" इत्येवं दशधा सिद्धान्ते प्रसिद्धम् १ । विनीयतेऽष्टप्रकारं कर्मानेनेति विनयः, स चतुर्धा
ज्ञानदर्शनचारित्रोपचारभेदात् । तत्र सबहुमानं ज्ञानग्रहणाभ्यासस्मरणादिर्ज्ञानविनयः । शङ्कादिरहितं श्रुतोक्ततत्त्वार्थ-
श्रद्धानं दर्शनविनयः । चारित्रवतश्चारित्रे समाहितचित्तता चारित्रविनयः । प्रत्यक्षेष्वाचार्यादिष्वभ्युत्थानाभिगमनाञ्ज-
लिकरणादिरुपचारविनयः । परोक्षेष्वपि कायवाङ्मनोभिरञ्जलिक्रियागुणसंकीर्तनाऽनुस्मरणादिरुपचारविनयः २ । तथा
व्यापृतो व्यापारप्रवृत्तः प्रवचनोदितक्रियानुष्ठानपरस्तस्य भावः कर्म वा वैयावृत्त्यम्, धर्मसाधननिमित्तमन्नादिसम्पादन-
मित्यर्थः । तच्चाचार्योपाध्यायस्थविरतपस्विशैक्षग्लानसाधर्मिककुलगणसङ्घलक्षणविषयभेदेन दशधा ३ । सुष्ठु आ मर्यादया
कालवेलापरिहारेण पौरुष्यपेक्षया चाऽध्ययनं स्वाध्यायः, स च पञ्चविधः, वाचनं प्रच्छनमनुप्रेक्षा आम्नायो धर्मो...

नम्। तत्र वाचनं शिष्याऽध्यापनम्। प्रच्छनं सन्देहच्छेदाय निश्चितबलाधानाय वा परानुयोगः। अनुप्रेक्षा सूत्रार्थयोर्मनसाऽभ्यासः। आम्नायो घोषविशुद्धं परिवर्त्तनं गुणनमित्यर्थः। धर्म्मोपदेशः प्रतीतः ४। तथा ध्यानमन्तर्मुहूर्त्तमात्रकालमेकाग्रचित्ताऽध्यवसानम्, तच्चतुर्विधं आर्त्तं रौद्रं धर्म्यं शुक्लं च। यदाह—"कामाणुरंजिअं अट्टं, रुद्दं हिंसाणुरंजिअं। धम्माणुरंजिअं धम्मं, सुक्कज्झाणं निरंजणं ॥१॥" तत्र ऋतं दुःखं तस्य निमित्तं तत्र वा भवं, ऋते वा पीडिते प्राणिनि भवमार्त्तम्। तच्चाऽमनोज्ञशब्दादिविषयसम्प्रयोगे तद्विप्रयोगासम्प्रयोगचिन्तनम् १। शूलादिवेदनासम्भवे च, तद्वियोगासम्प्रयोगाऽध्यवसानम् २। मनोज्ञविषयाणामवियोगसंयोगाऽभिलाषः ३। देवेन्द्रचक्रवर्त्यादिविभवप्रार्थनात्मकं निदानं ४ इति चतुर्विधमविरतदेशविरतप्रमत्तयतिसेवितं शोकाक्रन्दनस्वदेहताडनादिलक्षणलक्ष्यं तिर्यग्गतिहेतुः। तथा रोदयत्यपरानिति रुद्रो दुःखहेतुस्तेन कृतं तस्य कर्म वा रौद्रं, तच्च हिंसानुबन्धि–मृषानुबन्धि–स्तेयानुबन्धि–धनसंरक्षणानुबन्धि इति चतुर्विधमविरतदेशविरतस्वामिकमुत्सन्नवधादिलिङ्गगम्यं नरकगतिमूलम्। तथा श्रुतचरणधर्म्मादनपेतं धर्म्यम्, तच्च आज्ञा १ रागद्वेषकषायेन्द्रियादिजन्यापाय २ शुभाशुभकर्म्मविपाक ३ क्षितिवलयद्वीपसमुद्रादिसंस्थान ४-विचयभेदाच्चतुर्विधम्, प्रमादरहितयतिसेवितं प्रवचनश्रद्धानादिलिङ्गगम्यं देवगत्यादिफलं ज्ञेयम्। तथा शोधयत्यष्टप्रकारं कर्ममलं शुचं वा क्लमम्, क्लमयत्यपनयतीति निरुक्तविधिना शुक्लम्, तच्चतुर्विधम्। पृथक्त्ववितर्कं सविचारं प्रथमम्। तत्र पृथक्त्वं परमाण्वाद्येकद्रव्याश्रितानामुत्पादादिपर्यायाणां पृथक्त्वेन भेदेन वितर्कः श्रुतं यत्र तत्तथा, सविचारं चार्थव्य-

अनयोगेषु संक्रमणसहितम् । तत्रार्थो द्रव्यम्, व्यञ्जनं शब्दः, योगो मनःप्रभृतिः । तत्रार्थाद्व्यञ्जने व्यञ्जनादर्थं योगाद्योगान्तरं संक्रमो वाच्यः १ । एकत्ववितर्कमविचारं द्वितीयम्, एतच्च उत्पादाद्यन्यतरैकपर्यायविषयमर्थव्यञ्जनयोगेष्वसंक्रमणरूपं च २ । सूक्ष्मक्रियमनिवर्त्ति तृतीयम्, एतत्केवलिनो निर्वाणगमनकाले मनोवाग्योगयोर्निरुद्धयोरर्द्धे च काययोगे निरुद्धे सति उच्छ्वासनिःश्वासादिसूक्ष्मकायक्रियावतो भवति ३ । उत्सन्नक्रियमप्रतिपाति चतुर्थम्, एतच्छैलेशीगतस्य केवलिन इति ४ । ऐदंयुगीनानां शुक्लध्यानेऽनधिकारः । आद्यशुक्लद्वयस्य हि प्रायः पूर्वधरा एव ध्यातारः । उत्तरद्वयस्य त्वयोगायोगाः केवलिनः । लिङ्गान्यवधासंमोहादीनि । फलं मोक्षादि । इह च ध्यानशब्देन धर्म्यशुक्ले गृह्येते, तयोरेव निर्जराहेतुत्वात् ५ । तथा व्युत्सर्जनीयस्य परित्यागो व्युत्सर्गः, स द्विविधो-बाह्य आभ्यन्तरश्च । तत्र बाह्यो द्वादशातिरिक्तस्योपधेरतिरिक्तस्याऽनेषणीयस्य संसक्तस्य वान्नपानादेर्वा त्यागः । आभ्यन्तरः कषायाणां मृत्युकाले शरीरस्य च त्यागः । ननु व्युत्सर्गः प्रायश्चित्तमध्य एवोक्तस्तत्किं पुनरत्र भणनेन?, सत्यम्, सोऽतिचारविशुद्ध्यर्थं उक्तः, अयं तु सामान्येन निर्जरार्थं इत्यपौनरुक्त्यम् ६ । इदं षोढाऽभ्यन्तरं तपः । अभ्यन्तरत्वं चाभ्यन्तरस्य कर्मणस्तापकत्वादभ्यन्तरैरेवान्तर्मुखैर्भगवद्भिर्ज्ञायमानत्वान्मोक्षावाप्त्यान्तरङ्गत्वाच्च । एतच्च द्वादशविधं तप इह निर्जराहेतुः प्रोक्तम्, पूर्वं च यतिधर्ममध्ये संवरहेतुः, ततोऽस्य द्वयमपि साध्यमिति ज्ञापितं भवति । यदाह वाचकमुख्यः—"तपसा निर्जरा च" (तत्त्वा० ९-३) चशब्देन संवर आकृष्यते ॥

॥ इति समयसारटीकायां निर्जरातत्त्वनिरूपणो नाम षष्ठोऽध्यायः ॥

॥ अथ मोक्षतत्त्वं व्याख्यायते ॥

[illegible] उप्पज्जेइ केवलनाणदंसणाइ कसिणकम्मक्खए मोक्खे पण्णत्ते ॥ अयमत्र भावार्थः—अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमः क्षपकश्रेणिप्रतिपत्त्या प्राप्तक्षीणमोहव्यपदेशोऽन्तर्मुहूर्त्तप्रमाणायाः क्षीणमोहाद्धायाः [illegible] ज्ञानावरणपञ्चकदर्शनावरणचतुष्कान्तरायपञ्चकरूपाश्चतुर्दश प्रकृतीर्युगपत् क्षपयित्वा समुत्पन्नकेवलज्ञानदर्शनो जघन्येनान्तर्मुहूर्त्तमुत्कर्षतो देशोनां पूर्वकोटिं विहरति । ततश्चान्तर्मुहूर्त्तावशेषायुर्योगनिरोधमारभते । यदि चायुष्कादधिकान्यन्यकर्माणि तदा तत्समीकरणार्थं दण्ड १ कपाट २ मन्थाना ३ ऽन्तरपूरणा ४ ऽन्तर ५ मन्थान ६ कपाट ७ दण्डसंहरणे ८ रूपमष्टसमयप्रमाणं समुद्घातं गच्छति । समुद्घातादनन्तरं चान्तर्मुहूर्त्तं योगत्रयमपि व्यापारयति । अनुत्तरसुरपृष्टो मनोयोगं सत्यमसत्यामृषं वा प्रयुङ्क्ते । एवमामन्त्रणादौ द्विविधं वाग्योगमपि, काययोगमप्यौदारिकं फलकादानादौ । ततो योगनिरोधमारभते । इह त्रिविधोऽपि योगः प्रत्येकं द्विधा–सूक्ष्मो बादरश्च । ततः प्रथमं बादरकाययोगेन बादरौ वाङ्मनोयोगौ रुणद्धि । ततः सूक्ष्मकाययोगेन बादरकाययोगम्, सति तस्मिन् सूक्ष्मयोगस्य रोद्धुमशक्यत्वात् । ततस्तेनैव सूक्ष्मौ वाङ्मनोयोगौ रुणद्धि । ततः सूक्ष्मक्रियमनिवृत्ति तृतीयं शुक्लध्यानं ध्यायन् स्वात्मनैव सूक्ष्मकाययोगं निरुणद्धि । अन्यस्यावष्टम्भनीययोगान्तरस्य तदाऽसत्त्वात्, तन्निरोधानन्तरं समुच्छिन्नक्रियमप्रतिपाति चतुर्थं शुक्लध्यानं ध्यायन् ह्रस्वपञ्चाक्षरोच्चारणमात्रकालां शैलेशीं प्रतिपद्यते । शैलेशी नाम त्रिभागोनस्वदेहावगाहनाया-

१ "[illegible]—" इत्यपि । २ "[illegible]—" इत्यपि ॥

पुरुषवदनादिरन्ध्रपूरणेनात्मप्रदेशघनीकृतस्वदेहस्यात्मनः शैलेशो मेरुस्तस्येयं शैलेशीति स्थिरतामङ्गलत्वादत्यन्तस्थिरावस्थितिरिति । तस्यां च स्थितः प्रतिसमयमसंख्येयगुणनिर्जरश्चरमसमये वेद्यमायुर्नाम गोत्रमिति चत्वारि कर्माणि कृत्स्नानि युगपत् क्षपयति । ततोऽनन्तरसमये त्यक्तौदारिकतैजसकार्मणशरीरः साकारोपयोगोपयुक्त ऊर्ध्वं गच्छन्नृजुश्रेण्या यावत्सु आकाशप्रदेशेष्ववगाढस्तावत एव प्रदेशानूर्ध्वमप्यवगाहमानस्तस्मिन्नेव समये लोकान्तमुपैतीति मुक्तसुखं कृत्स्नकर्मक्षयो मोक्ष इति ॥ ननु कृतकर्मक्षयाणां देहत्यागे भूमेरधः किं न गतिः ? इत्याह—खीणकम्माणो अ गउरवाभावाओ नाहो गच्छंति ॥ अनेककर्मत्वादधोगतिहेतुर्गौरवं नास्तीत्याशयः ॥ तर्हि तिर्यक्कथं न गतिः ? इत्याशंक्याह—जोगप्पओगाभावाओ न तिरिअं गच्छंति ॥ योगः काययोगादिः प्रयोगः परप्रेरणं, शेषं स्पष्टम् ॥ ननु गमनकारणाभावादूर्ध्वगमनमपि न प्राप्नोति । ततो यत्र शुक्लशैलावस्थानं प्राप्तं, नेत्याह—निस्संगत्ताओ गयलेवालाउफलं व बंधच्छेदाओ एरंडफलं व पुव्वपओगाओ धणुविमुक्कउसु व्व तहागइपरिणामाओ धूम व्व उड्ढं गच्छंति ॥ यथाऽष्टमृत्तिकालेपलिप्तमलाबुफलं जलेऽधः पतति, जलक्लेदविश्लिष्टमृत्तिकाबन्धनं तु लघु सदूर्ध्वमेव गच्छति, तथा कर्मसङ्गकानिवघनीकृता अनन्तभवसन्तानेनपतात्संसारेऽनियमेन गच्छन्ति, तत्सङ्गविमुक्तास्तूर्ध्वमेवेति । अन्यच्च यथा बीजकोशबन्धच्छेदादेरण्डफलमूर्ध्वं गच्छति, तथा कर्मलक्षणबन्धच्छेदादात्मानोऽप्यूर्ध्वं गच्छन्ति । अपरं च यथा पूर्वप्रयोगात्संस्कारवशात् धनुर्विमुक्त इषुर्लक्ष्याभिमुखमेव गच्छति, तथा भवस्था जन्तवोऽप्यपवर्गप्राप्तये सततं प्रणिधानं चक्रुर्यांसस्तदभावेऽपि पूर्वाभ्यासादेवोर्ध्वं गच्छन्ति । इतरच्च यथा तथागतिपरिणामाद्धूम ऊर्ध्वं गच्छति, तथा

रणकर्मक्षये सति जीवा अपि तथास्वभावत्वादूर्ध्वमेव गच्छन्ति ॥ अथ कियदूर्ध्वं गच्छन्तीत्याह—लोगंते अ चिट्ठंति ॥
लोकान्ते च तिष्ठन्ति । सर्वार्थसिद्धविमानोपरि द्वादशयोजनानन्तरभाविसिद्धिशिलाया ऊर्ध्वं योजनेऽतिक्रान्ते लोकान्तः,
तस्य च योजनस्य योऽन्त्यक्रोशस्तस्य षड्भागे सिद्धानामवस्थितिः । यदाहुः—" ईसीपब्भाराए, उवरिं खलु जोयणंमि
जो कोसो । कोसस्स य छब्भाए, सिद्धाणोगाहणा भणिआ ॥ १ ॥" इति । ननु शरीरानुविधायी जीवः, तदभावे च स्वाभाविक-
लोकाकाशप्रदेशपरिमाणत्वात्तावद्विसर्प्पणं प्राप्नोति ?, उच्यते, संहरणविसर्प्पणहेतोर्नामकर्मसम्बन्धस्याभावान्न विसर्प्पण-
मिति ॥ ननु लोकान्तादप्यूर्ध्वं कथं न गच्छन्तीति चोद्यं निरस्यन्नाह—धम्मत्थिकायाभावेणं न परओ गई ॥
गत्युपग्रहहेतुधर्मास्तिकायस्तदभावादलोके गतिरिति ॥ ततश्च—तत्थ य सासयं निरुवमं सहावजं सुक्खं अणु-
हवंति ॥ स्पष्टम् । नवरं स्वभावजं स्वभावादात्मस्वरूपमात्राज्जायते न पुनः कुतश्चित्कारणान्तरादिति ॥ निरुपममित्ये-
तदेव समर्थयन्नाह—सुरासुरनराणं सव्वद्धापिंडिआइं सोक्खाइं जस्साणंतभागे न भवंति ॥ स्पष्टम् । नवरं
सर्वाद्धापिण्डितानि कालत्रयसम्बन्धीन्येकत्र मेलितानि ॥ सम्प्रति सिद्धानां प्ररूपणाप्रकारानाह—ते अ सिद्धा संत-
पयपरूवणाईहिं नवहिं अणुओगदारेहिं परूविअव्वा ॥ इह नवानुयोगद्वाराणि । तद्यथा—" सन्तपयपरूव- ॥ ३२ ॥
णया १, दव्वपमाणं च २ खेत्त ३ फुसणा य ४ । कालो अ ५ अंतरं ६ भाग ७, भाव ८ अप्पाबहुं चेव ९ " ॥१॥ तत्र सद्वि
द्यमानं पदं प्रकरणात्सिद्धाख्यं, तस्य च सत्त्वसाधनायेदमनुमानं, सिद्ध इति पदं सत्, शुद्धपदत्वात्, यद्यच्छुद्धपदं तत्त-
त्सत्, यथा घटः, व्यतिरेके नभोऽम्भोजमिति । तस्य प्ररूपणा गत्यादिमार्गणाद्वारेषु विचारणात्मिका सत्पदप्ररूपणेति ।

द्रव्यप्रमाणं कियन्तः सिद्धा इति। क्षेत्रं कियति क्षेत्रे सन्तीति। स्पर्शना कियत्क्षेत्रं स्पृशन्तीति। क्षेत्रस्पर्शनयोरयं विशेषः—यत्रावगाढस्तत्क्षेत्रं, स्पर्शनायां त्वेक आकाशप्रदेशप्रतरो बहिः सर्वतोऽप्यधिको लभ्यत इति। कालः स्थिति-लक्षणः। अन्तरं विवक्षितस्वभावत्यागे पुनस्तद्भावावाप्तिरूपम्। भागो जीवानां कतितमे भागे सिद्धा इति। भावः कस्मिन् भावे इति। अल्पबहुत्वं स्त्र्यादिसिद्धानामन्योऽन्यं स्तोकबहुत्वचिन्ता। तत्र सत्पदप्ररूपणार्थं मार्गणास्थानानि—"गइ इंदिए अ काए, जोए वेए कसाय नाणेसु। संजम दंसण लेसा, भव सम्मे सन्नि आहारे" ॥ १ ॥ इत्येवंरूपाणि। तत्र मनुष्यगतौ पञ्चेन्द्रियजातौ त्रसकाये केवलज्ञानदर्शनयोर्यथाख्यातचारित्रे भव्ये क्षायिकसम्यक्त्वे संज्ञिन्यनाहारके सिद्धिर्भवति न शेषपदेषु १। द्रव्यप्रमाणद्वारेऽनन्तानि सिद्धद्रव्याणि २। क्षेत्रद्वारे लोकस्यासंख्येये भागे एकः सिद्धः सर्वेऽपि वा, सर्वस्यापि मुक्तिक्षेत्रस्य लोकासंख्येयभागरूपत्वात् ३। स्पर्शना पूर्वोक्तयुक्त्या साधिका, अथवा एकः सिद्धो निजसर्वप्रदेशैरनन्तान् सिद्धान् स्पृशति। देशप्रदेशैस्तु सर्वप्रदेशस्पृष्टेभ्योऽसंख्यगुणान्। यदाह—"फुसइ अणंते सिद्धे, सव्वपएसेहिं नियमसो सिद्धो। तेवि असंखिज्जगुणा, देसपएसेहिं जे पुट्ठा ॥ १ ॥" इति ४। कालः सर्वसिद्धापेक्षयाऽना-द्यनन्तः, एकं सिद्धं प्रतीत्य साद्यनन्तः ५। अन्तरं नास्ति प्रतिपाताभावात् ६। भागद्वारे सर्वजीवानामनन्तभागे सिद्धाः ७। भावद्वारे तेषां सम्यक्त्वज्ञानदर्शनानि क्षायिके भावे जीवत्वं पारिणामिके ८। अल्पबहुत्वद्वारे स्तोका नपुं-सकसिद्धाः, ततः स्त्रीसिद्धाः संख्येयगुणाः, ततः पुरुषसिद्धाः संख्येयगुणाः ९ दिङ्मात्रमिदम्, ग्रन्थान्तरे तु क्षेत्रका-लगत्यादिपञ्चदशद्वारेषु सत्पदप्ररूपणादिविचारः प्रपञ्चितः पूर्वर्षिभिः ॥

॥ इति समयसारटीकायां मोक्षतत्त्वनिरूपणो नाम नवमोऽध्यायः ॥ [illegible] ॥

इदानीं सम्यग्ज्ञानभेदप्रदर्शनपूर्वं सम्यग्दर्शनप्ररूपणां विधित्सुः पूर्वदर्शिततत्त्वसप्तकस्य संख्यान्तरं प्ररूपयन्नाह— एआणि मत्त तत्ताणि पंचंतब्भूआणं पुण्णपावाणं विभिन्नत्तविवक्खाए नवावि भण्णंति ॥ स्पष्टम् । एषां च तत्त्वानामवबोधः क्षयोपशमविशेषात्कस्यचित्संक्षेपेण कर्मक्षयाच्च कस्यचिद्विस्तरेण भवति ॥ स च सम्यग्ज्ञानमित्याह— संखेवेणं वित्थरेण वा तेसिं अवबोहे सम्मन्नाणं ॥ निरुपितार्थम् ॥ तद्भेदानाह—तं च आभिणिबोहिअसुअ-ओहिमणपज्जवकेवलनाणभेएहिं पंचहा नायव्वं ॥ ज्ञानशब्दस्याभिनिबोधिकादिपदेषु प्रत्येकं सम्बन्धः । ततश्च अभीत्याभिमुख्ये, नीति नैयत्ये, अभिमुखो वस्तुयोग्यदेशावस्थानापेक्षी नियत इन्द्रियाण्याश्रित्य स्वस्वविषयापेक्षी बोधो मतिरूपोऽभिनिबोधः, स एव स्वार्थे इकण्याभिनिबोधिकं तच्च तज्ज्ञानं चाभिनिबोधिकज्ञानं, इन्द्रियपञ्चकमनोनिमित्तो बोध इत्यर्थः । मनश्चक्षुर्वर्जेन्द्रियचतुष्केन चतुर्विधो व्यञ्जनावग्रहः । अर्थावग्रहेहावायधारणास्तु पञ्चभिरिन्द्रियैर्मनसा चेति प्रत्येकं षड्विधा इत्यस्याष्टाविंशतिर्भेदाः १ । तथा श्रवणं श्रुतं, अभिलापप्लावितार्थग्रहणस्वरूप उपलब्धिविशेषः । श्रुतं च तज्ज्ञानं च श्रुतज्ञानम् । अथवा श्रूयत इति श्रुतं शब्दः, साभिलापज्ञानस्य कारणभूतः, स चासौ कारणे कार्योपचाराज्ज्ञानं च श्रुतज्ञानम् । तस्य च—" अक्खरसन्नीसम्मं, साईअं खलु सपज्जवसिअं च । गमिअं अंगपविट्ठं, सत्तवि एए सपडिवक्खा १ ।" इति चतुर्दश भेदाः २ । तथाऽवधानमवधिरिन्द्रियाद्यनपेक्षमात्मनः साक्षादर्थग्रहणम् । अवधिरेव ज्ञानमवधिज्ञानम् । अथवाऽवधिर्मर्यादा तेनाऽवधिना रूपिद्रव्यमर्यादात्मकेन ज्ञानमवधिज्ञानम् । एतच्चानुगा-मिवर्द्धमानकप्रतिपातितदितरभेदैः षोढा ३ । तथा पर्यवनं पर्यवः, उड़ शब्देऽ...

सर्वतो मनःपुद्गलावबोधो मनुष्यक्षेत्रवर्त्तिसंज्ञिमनोद्रव्यालम्बनत्वात्, स एव ज्ञानं मनःपर्यवज्ञानम् । इदं च मनसः पर्यायेषु परिणामेषु ज्ञानमिति मनःपर्यायज्ञानमुच्यते, मनसः पर्ययणं मनःपर्ययः, सर्वतस्तत्परिच्छेदः स चासौ ज्ञानं चेति व्युत्पत्त्या मनःपर्ययज्ञानमित्यपि, ऋजुमतिविपुलमतिसंज्ञकौ द्वौ भेदावस्य ४ । तथा केवलमसहायज्ञाननिरपेक्षमसाधारणमनन्तं सम्पूर्णं वा ज्ञानं केवलज्ञानम् ५ । इति पञ्चधा सम्यग्ज्ञानं ज्ञातव्यम् ॥ अथ सम्यग्दर्शनं प्ररूपयति—तेसिं च्चिअ तत्ताणं सद्दहणं सम्मदंसणं नाणस्स हेऊ ॥ तेषामेव जीवाजीवादीनां तत्त्वानां श्रद्धानं तथेत्येवंरूपा रुचिः सम्यग्दर्शनम्, ज्ञानस्य हेतुः सम्यग्ज्ञानस्य कारणम् । ननु ज्ञानदर्शनयोर्युगपल्लाभात्कथं ज्ञानस्य हेतुर्दर्शनम् ?, उच्यते, ज्ञाननिर्मलीकारकत्वेनोपकारत्वात् । उक्तं च—" कारणकज्जविभागो, दीवपगासाण जुगवजम्मेवि । जुगवुप्पन्नंपि तहा, हेऊ नाणस्स सम्मत्तं ॥ १ ॥ " इति । तच्च कस्यचित्कर्मोपशमादिमाहात्म्याद्गुरूपदेशादिनिरपेक्षतारूपेण निसर्गेण स्वभावेनोत्पद्यते, यथा नारकादीनाम् । कस्यचित्तु कर्मोपशमादिसद्भावे गुरूपदेशादिबाह्यनिमित्तावष्टम्भरूपेणाधिगमेन निमित्तेनेति दर्शयन्नाह—तं च कस्सइ कम्मोवसमाईहिं गुरुवएसाइनिरवेक्खरूवेणं निस्सग्गेणं उप्पज्जइ । कस्सइ कम्मोवसमाइसब्भावे गुरुवएसजिणपडिमादंसणाइबाहिरउवट्ठंभरूवेणं अहिगमेणं ॥ स्पष्टम् ॥ अथ सम्यग्दर्शनस्य भेदानाह—तस्स य सम्मदंसणस्स तिण्णि भेआ पण्णत्ता, तंजहा—उवसमिअं, खओवसमिअं, खइअं च ॥ सुबोधम् ॥ एतदेव क्रमेण स्पष्टयन्नाह—तत्थ उवसमिअं उवसमसेढीए अणंताणुबंधिकसायाणं मिच्छत्तमीससम्मत्तलक्खणस्स दंसणतिगस्स य उवसमे भवइ ॥ तत्रेति तेषां त्रयाणां भेदानां मध्ये

औपशमिकमुपशमश्रेण्यामुपशमश्रेणीप्रविष्टस्य जन्तोरनन्तानुबन्धिनां चतुर्णां क्रोधादीनां कषायाणां मिथ्यात्वमिश्रसम्य-
क्त्वलक्षणस्य दर्शनत्रिकस्य चोपशमे सति भवति । उपशमो नाम विपाकप्रदेशरूपतया द्विविधस्याप्युदयस्य भस्मच्छन्न-
वह्निवद्विष्कम्भणम् , ततश्चोपशमेन दर्शनमोहनीयस्योदयविष्कम्भणेन निर्वृत्तमौपशमिकमित्यर्थः ।) इदमुपशमश्रेणिभावि
प्रोक्तमौपशमिकम् । अथ अनादिमिथ्यादृष्टीनां चतुर्गतिगतजन्तूनां प्रथमसम्यक्त्वलाभे यद्भवति तत्सूत्रेऽनन्तरमेव
वक्ष्यमाणमपि सुखावबोधार्थं पूर्वमेव प्रपञ्च्यते । इहापारसंसारपारावारान्तर्वर्त्ती जन्तुर्मिथ्यात्वप्रत्ययादनन्तपुद्गलपरा-
वर्त्तान् यावद्विविधदुःखान्यनुभूय कथमपि तथाभव्यत्वपरिपाकवशाद्गिरिसरित्पुपलघोलनाकल्पेनानाभोगनिर्वर्तितेन
यथाप्रवृत्तकरणेन-" भण्णइ करणं तु परिणामो " इति वचनादध्यवसायविशेषरूपेणायुर्वर्जानि सप्तापि कर्माणि पृथक्-
पल्योपमासङ्ख्येयभागन्यूनैकसागरोपमकोटिकोटीस्थितिकानि करोति । अत्र चान्तरे जीवस्यातिप्रकृष्टघनरागद्वेषपरि-
णामजनितो वज्राश्मवद्दुर्भेदोऽभिन्नपूर्वः कठिनरूढगूढग्रन्थिर्भवति । इमं च ग्रन्थिं यावदभव्या अपि यथाप्रवृत्तकरणेन
कर्म क्षपयित्वाऽनन्तशः समागच्छन्ति, तद्भेदं तु कर्तुमसमर्थाः । पुनरपि व्यावृत्य संक्लेशवशादुत्कृष्टस्थितीनि कर्माणि
बध्नन्ति । कश्चित्पुनर्महात्मा समासन्नपरमनिर्वृतिसुखः समुल्लसितप्रचुरदुर्निवारवीर्यप्रसरो निशिताकुण्ठकुठारधारयेवा-
पूर्वकरणरूपपरमविशुद्ध्या यथोक्तस्वरूपस्य ग्रन्थेर्भेदं विधाय मिथ्यात्वमोहनीयकर्मस्थितेरन्तर्मुहूर्त्तमुदयक्षणादुपर्यति-
क्रम्यानिवृत्तिकरणसंज्ञितेन विशुद्धिविशेषेणान्तर्मुहूर्त्तकालप्रमाणं वेद्यदलिकाभावरूपमन्तरकरणं करोति । तस्य चायं
विधिः—यदुत अन्तरकरणस्थितेर्मध्याद्दलिकं गृहीत्वा गृहीत्वा प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, एवं च ताव-

न्प्रक्षिपति यावदन्तरकरणदलिकं सकलमपि क्षीयते, अन्तर्मुहूर्त्तेन च कालेन सकलदलिकक्षयः । तस्मिंश्चान्तरकरणे कृते मिथ्यात्वमोहनीयस्य स्थितिद्वयं भवति—अन्तरकरणादधस्तनी प्रथमा वेद्यमाना स्थितिरन्तर्मुहूर्त्तमाना, द्वितीया पुनरन्तरकरणादुपरितनी शेषा किञ्चिदूनसागरोपमकोटिकोटिप्रमाणा । स्थापना । तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेव, अन्तर्मुहूर्त्तेन पुनस्तस्यामपगतायामूषरपूर्वदग्धेन्धनदेशकल्पमन्तरकरणमवाप्य मिथ्यात्वमदनस्य विध्यातादान्तर्मुहूर्त्तिकमौपशमिकसम्यक्त्वं प्राणी प्राप्नोति ॥ तथा सम्यक्त्वात्प्रच्युत्य मिथ्यात्वं प्रतिपन्नो यः सादिमिथ्यादृष्टिः सम्यक्त्वमिश्रपुञ्जौ मिथ्यात्वे प्रक्षिप्य षड्विंशतिसत्कर्मा सञ्जातः शुभपरिणामोपगतः सोऽप्येतत्समासादयतीत्येतदर्थं मनसि कृत्य प्राह—अहवा जे अणाइमिच्छद्दिट्ठी जीवे अहापवत्तकरणेणं अज्झवसाणविसेसेणं पलिओवमासंखिज्जभागहीणसागरोवमकोडाकोडिठिइआणि सत्त कम्माइं काउं अपुव्वकरणेणं विभिन्नकम्मगंठी अनिअट्टिकरणेणं अंतोमुहुत्तकालमाणं वेअणिज्जमिच्छत्तमोहणीअदलिआभावरूवं अंतरकरणं करेइ, तम्मि अकए मिच्छत्तमोहणीअस्स ठिइदुगं हवइ—पढमा वेइज्जमाणा ठिई अंतोमुहुत्तपमाणा, बीआ अंतरकरणाओ उवरिं सेसा ठिइत्ति । अंतोमुहुत्तेण य पढमठिईए वेइआए अंतरकरणस्स पढमे च्चिअ समए मिच्छत्तदलिओदयाऽभावाओ तस्स जीवस्स उवसमिअं सम्मत्तं संपज्जइ । उव्वलिअसम्मत्तमीसपुंजस्स वा मिच्छद्दिट्ठिस्स ॥ व्याख्यातार्थम् ॥ अथ क्षायोपशमिकसम्यक्त्वमुच्यते—अनन्तरोक्तविधिलब्धौपशमिकसम्यक्त्वेनौषधविशेषकल्पेन मदनकोद्रवस्थानीयं मिथ्यात्वमोहनीयं जीवः शोधयित्वा त्रिधा करोति । यथा

तीक्ष्णद्रवेण शोध्यमाना मदनकोद्रवाः केचिच्छुध्यन्ति, केचिदर्द्धविशुद्धा एव भवन्ति, केचित्सर्वथैव न शुध्यन्ति । एवमध्यवसायविशेषतो जिनतत्त्वरुचिप्रतिबन्धकदुष्टरसोच्छेदकरणेन शोध्यमानं मिथ्यात्वमपि शुद्धमर्द्धविशुद्धमविशुद्धं चेति त्रिधा जायते । स्थापना । तत्र शुद्धपुञ्जः सर्वज्ञधर्मे सम्यक्प्रतिपत्त्यप्रतिबन्धकत्वेनोपचारात्सम्यक्त्वपुञ्ज उच्यते । द्वितीयस्त्वर्द्धशुद्ध इति जिनधर्मे औदासीन्यकृन्मिश्रपुञ्ज उच्यते । अशुद्धः पुनरर्हदादिषु मिथ्याप्रतिपत्तिहेतुत्वान् मिथ्यात्वपुञ्जोऽभिधीयते । अन्तरकरणे चान्तर्मुहूर्त्तमौपशमिकसम्यक्त्वेऽनुभूते तदनन्तरं नियमात्त्रयाणां पुञ्जानां मध्यादेकतमस्योदयो भवति ॥ विशुद्धपुञ्जोदये च क्षायोपशमिकं सम्यक्त्वमित्येतदेवाह—एवं च लद्धेणं उवसमिअसम्मत्तेणं ओसहविसेसकप्पेणं मयणकोद्दवकप्पं मिच्छत्तमोहणीअं विसोहिज्जमाणं तिहा भवइ, तंजहा—सुद्धं, अद्धविसुद्धं अविसुद्धं च । एए अ सुद्धाइआ पुञ्जा तत्तसद्दहणउदासीणत्तविवरीअसद्दहणजणगाओ जहाकम्मं सम्मत्तमीसमिच्छत्तसण्णा भण्णंति । जया णं सुद्धे पुंजे उदेइ तया खओवसमिअं सम्मत्तं भण्णइ ॥ सदत्ताणं । "जया त्ति" णंसद्दो वाक्यालङ्कारे इह चाविशुद्धपुञ्जाद्विशुद्धार्द्धविशुद्धयोः पुञ्जयोः सङ्क्रान्तिर्भवति । अर्द्धविशुद्धाच्च तदितरयोर्द्वयोः, विशुद्धात्त्वविशुद्ध एव न तु मिश्रे । तदुक्तम्—"मिच्छत्ता संकंती, अविरुद्धा होइ सम्ममीसेसु । मीसाओ वा दोसुं, सम्मा मिच्छं न उण मीसं ॥१॥" इति ॥ अथ शुद्धपुञ्जोदये क्षायोपशमिकव्यपदेशः कुतः ? इत्याह—

उदिण्णस्स मिच्छत्तस्स खयाओ अणुइण्णस्स उवसमाओ ॥ क्षयोपशमाभ्यां निर्वृत्तं क्षायोपशमिकमित्यर्थः । ननूदीर्णस्य मिथ्यात्वस्य क्षयोऽनुदीर्णस्य चोपशम - औपशमिकेऽप्यस्ति, ततः कस्मादस्य विशेषः ? इत्याशङ्कोपशमस्येव ॥ ३५ ॥

दर्शनस्य क्षयेणात्यन्तिकोच्छेदेन निर्वृत्तं क्षायिकम्। ततः सम्यग्दर्शने क्षीणे कथं सम्यग्दृष्टित्वम् ?, उच्यते, विशुद्धा मिथ्यात्वपुद्गला एव सम्यग्दर्शनं तदेव क्षीणं, यत्पुनरात्मपरिणतिस्वभावं तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं तन्न क्षीणं, अपि च तदावरणशुद्धाभ्रपटलविगमे मनुष्यदृष्टिरिव विशुद्धतरस्वरूपं भवति ॥ अथ क्षायिकस्य लाभः केषामित्याह—लाइअगं आरंभगा संखिज्जवासाउआ मणुअ चिअ नायव्वा ॥ प्रकटार्थम् । प्राप्तक्षायिकसम्यक्त्वश्च तस्मिन्नेव भवे तृतीये चतुर्थे वा सिध्यति । तत्र देवभवेन नरकभवेन वाऽन्तरितस्तृतीये । अथ तिर्यक्षु मनुष्येषु वा समुत्पद्यते तर्हि असंख्येयवर्षायुष्केषु, न संख्येयवर्षायुष्केषु । ततश्च प्राप्तदेवत्वश्च्युत्वा मनुष्यभवे सिध्यतीति चतुर्थे ॥ अथानन्तरोक्तं सम्यग्दर्शनभेदत्रयं चतुर्गतिगतजन्तुषु चिन्तयन्नाह—एअं च तिविहंपि सम्मत्तं वेमाणिएसुं आइमनरयपुढवीनिरं संखिज्जासंखिज्जाउमणुएसुं असंखिज्जाउतिरिएसुं च लब्भइ ॥ वैमानिकेषु त्रिविधमपि सम्यक्त्वं लभ्यते । यथा—अनादिमिथ्यादृष्टेर्देवस्य प्रथमसम्यक्त्वावाप्तावन्तरकरणकालेऽन्तर्मुहूर्त्तमौपशमिकम् , ततश्चानन्तरकालादौ पुञ्जत्रयोदयतः क्षायोपशमिकं मनुष्यतिर्यग्भ्यो वा यः क्षायोपशमिकसम्यग्दृष्टिर्देवेषूत्पद्यते तस्यैतत्पारभविकमपि, क्षायिकं तु पूर्वबद्धायुष्कस्य क्षपकश्रेणिमारुह्य दर्शनसप्तकक्षयाद्याप्तक्षायिकस्य मृत्वा देवत्वं प्राप्तस्य पारभविकं, न तु तद्भविकं, मनुष्यस्यैव तत्र क्षायिकारम्भकत्वेनोक्तत्वात् । तथा प्रथमनरकपृथ्वीत्रये औपशमिकक्षायिके वैमानिकवत् क्षायोपशमिकं त्वौपशमिकानन्तरकालभावि तद्भविकं, पारभविकं तु कार्मग्रन्थिकमतेन वैमानिकदेवेभ्योऽन्यत्र वान्तक्षायोपशमिकस्य क्षायोपशमिकस्य तिर्यङ्मनुष्याणामुत्पादाभावात्ति । सिद्धान्तिनस्त्वाहुः—क्षायोपशमिकसम्यक्त्वयुक्ता अपि पूर्व-

वद्धायुषोऽमी केचित्षष्ठनरकपृथिवीं यावदुत्पद्यन्त इति पारभविकमपि । तथा संख्येयवर्षायुष्कमनुष्येषु प्रथमसम्यक्त्व-
लाभकाले उपशमश्रेण्यां चौपशमिकं, तदनन्तरकालादिभावि तु क्षायोपशमिकं ताद्भविकम् । देवादीनां तु क्षायोपशमिक-
सम्यग्दृष्टीनां मनुष्येषूत्पत्तौ पारभविकमपि । क्षायिकं तु क्षपकश्रेण्यां ताद्भविकं, नारकदेवानां तु तद्वतां तत्रोत्पत्तौ पार-
भविकमपि । असंख्येयवर्षायुषां तु मनुष्यतिरश्चामौपशमिकक्षायिके वैमानिकवत् । क्षायोपशमिकं त्वौपशमिकानन्तर-
कालादिभावि ताद्भविकम् । पारभविकं तु कार्मग्रन्थिकमतेन तद्युक्तानां तिर्यङ्मनुष्याणां वैमानिकेष्वेवोत्पादात्पूर्वभवजा-
युषां चावश्यं मिथ्यात्वं गत्वैवैतेषूत्पादाच्च भवति । सैद्धान्तिकमते तु षद्धायुषां तद्वतामपि केषाञ्चिदेतेषूत्पादाद्भवतीति ॥
तथा—सेसदेवनारएसुं संखिज्जाउसन्निपणिंदितिरिएसुं च उवसमिअगाओवसमिआइं ॥ शेषदेवेषु भवन-
पतिव्यन्तरज्योतिष्केषु शेषनारकेषु पङ्कप्रभादिपृथिवीचतुष्कवर्त्तिषु संख्येयवर्षायुःसंज्ञिपञ्चेन्द्रियतिर्यक्षु चौपशमिकक्षा-
योपशमिके भवतः । क्षायिकं तु संख्येयवर्षायुष्कमनुष्यस्यैवारम्भकत्वाच्च ताद्भविकम् । क्षायिकसम्यग्दृष्टेरेतेष्वनुत्पत्तेर्नापि
पारभविकम् । तथा—एगदुतिचउरिंदिआणं असन्निपंचिंदिआणं च एएसिं तिण्हं मज्झाओ एगंपि नत्थि ॥
स्पष्टम् । इह शुद्धपुञ्जस्य चरमपुद्गलग्रासानुभवरूपं यद्वेदकं सम्यक्त्वं तद्वस्तुतः क्षायोपशमिकमेव, तथानन्तानुबन्ध्युदया-
दौपशमिकसम्यक्त्वं वमतः किञ्चित्तद्रसास्वादनेन यत्सास्वादनं सम्यक्त्वं तदपि प्रबलकषायकलुषितत्वात्परिपाताभिमु-

---

१ "मनुष्येषूत्पत्तौ" इत्यपि पाठः । २ "मिनि" इत्यपि पाठः ॥

स्वभाव मिथ्यात्वकल्पमितुपेक्षितम् । ततः क्षायिकादयस्त्रय एव भेदाः प्रोक्ताः सम्यक्त्वस्य । कारकरोचकादयोऽपि भेदा इहैवान्तर्भूता ॥

॥ इति समयसारटीकायां सम्यग्ज्ञानदर्शनप्ररूपणो नामाष्टमोऽध्यायः ॥ ८ ॥

॥ अथ सम्यक्चरणं प्ररूप्यते ॥

सावज्जजोगविरई सम्मंचारित्तं पण्णत्तं ॥ सावद्या योगा जन्तुघातादिरूपव्यापारास्तेभ्यो विरतिर्ज्ञानश्रद्धानपूर्विका निवृत्तिः सम्यक्चारित्रं प्रज्ञप्तम् । ज्ञानदर्शनं विना कृतस्य चारित्रस्य सम्यक्चारित्रत्वानुपपत्तेः ॥ सर्वतो देशतश्च सावद्यव्यापारपरिहारात्, तद्द्विविधमाह—तं च दुविहं, तंजहा—सव्वओ देसओ अ ॥ स्पष्टम् ॥ तत्रादौ सर्वचारित्रस्वरूपमाह—तत्थ सव्वओ भरहेरावयपढमंतिमतित्थयराणं पंच महव्वयाइं । मज्झिमतित्थयराणं महाविदेहतित्थयराणं च परिग्गहविरइए मेहुणविरई मिद्धत्ति चत्तारि ॥ तत्रेति सर्वदेशचारित्रयोर्मध्ये सर्वचारित्रं भरतैरावतयोश्च प्रथमान्तिमतीर्थकराणां पञ्च महाव्रतानि सर्वप्राणातिपातसर्वमृषावादसर्वादत्तादानसर्वमैथुनसर्वपरिग्रहविरमणरूपाणि । मध्यमतीर्थङ्कराणां द्वाविंशतिसंख्यानां तथा महाविदेहतीर्थङ्कराणां परिग्रहविरत्या मैथुनविरतिः सिद्धेति हेतोश्चत्वारि । अयमत्र भावः—भरतैरावतमध्यमतीर्थकरसाधवो महाविदेहसाधवश्च ऋजुप्रज्ञाः सर्वेऽपि, प्राज्ञाश्चेत्यर्थः ।

१ पाठा० इद्धि ॥

ततो यथोपदिष्टानुपालका उपदेशमात्रादप्यशेषहेयार्थाभ्यूहनेन तत्परिहारसमर्थाश्च तेषां गुरुप्रत्युपन्यस्तपरिग्रहविरमणेनैव
मैथुनविरतिप्रतिपत्तिः, ततस्तेषां चत्वारि महाव्रतानि। भरतैरावतप्रथमान्तिमतीर्थकरसाधूनां तु न तथा प्रतिपत्तिः । यतः
प्रथमतीर्थङ्करसाधवस्तत्कालस्वभावादेव ऋजुजडाः शाठ्यरहितास्तथाविधोहापोहाभावात्तुच्छार्थमात्रग्राहिणश्चेत्यतश्च । चर-
मतीर्थङ्करसाधवो वक्रजडाः शठत्वमुग्धत्वधर्मद्वयोपेताः । तत ऋजुजडानां बहुधा बहुभिश्चोपदेशैः समस्तहेयार्थज्ञानमस्म-
याद्वक्रजडानां तु तेन तेन व्याजेन हेयार्थमेवाभावात्तथाप्रतिपत्त्यभावेन पञ्च महाव्रतानि ॥ अथ चारित्रस्य पञ्च समितय-
स्तिस्रो गुप्तयश्चेत्येता अष्टौ मातर इत्याह—तस्स य चरणस्स पंच समिईओ तिण्णि गुत्तीओ मायाओ ॥ युग्मम् ॥
कुतो मातृत्वमित्याह—एआहिंतो चरणस्स जणणपालणविसोहणभावाओ ॥ एताभ्यः सकाशाच्चारित्रस्य जनना-
दिभावात् । तत्र जननमभूतस्य प्रादुर्भावनं, पालनं सर्वोपद्रवनिवारणेन पोषणेन च वृद्धिनयनं, विशोधनं चारित्रस्यैवा-
ऽतिचारमलिनस्य सतो निर्मलीकरणम् ॥ अथ चारित्रभेदानाह—भेआ पुण सामाइअ १ छेओवट्ठावण २ परि-
हारविसुद्धिअ ३ सुहुमसंपराय ४ अहक्खाय ५ नामाणो पंच दट्ठव्वा ॥ भेदाः प्रकाराः पुनः सामायिकादि-
नामानः पञ्च द्रष्टव्याः । तत्र समस्य रागद्वेषरहितस्य सत आयो ज्ञानादीनां लाभः प्रशमसुखरूपः समायः, स एव सामा-
यिकम् , विनयादित्वात् इकण् । समायः प्रयोजनमस्येति वा सामायिकम् । यद्यपि च सर्वमपि चारित्रमविशेषतः
सामायिकं सर्वसावद्यविरतिरूपत्वात्तथापि च्छेदादिभिर्विशेषणैर्विशिष्यमाणमर्थतः शब्दतश्च नानात्वं भजते । प्रथमं पुन-

१ "चारित्तस्स" इत्यपि ॥

पुण अंनेकपयं, मुंचंतो मुंति संजोगा ॥१॥ भो मनीषिन् ! इह यावतां पदानामेककादिसंयोगान् ज्ञातुमिच्छसि तावत एककादीनेकोत्तरानङ्कान् ऊर्ध्वमूर्ध्वं स्थापयित्वा उपर्युपरि क्षिप, उपरिस्थितेऽङ्केऽधःस्थिताङ्कस्य प्रक्षेपं विधेहीत्यर्थः । अधस्तनाङ्कस्तु तथैव ध्रियते, किं कुर्वन् ? इत्याह—पुनः पुनरन्त्यैकपदं मुञ्चन् परिहरन् प्रक्षेपे प्रक्षेपे एकैकमन्त्यपदं प्रक्षेपमर्हितं न कार्यमिति भावः । एवं च कृते भवन्ति संयोगा एककादय इति । इह यद्यपि द्वादशानां प्रतानामेककादिसंयोगा इष्टास्तथापि लाघवार्थं पञ्चानां पदानां संयोगा भाव्यन्ते। एकाद्येकोत्तरतया पञ्चानामङ्कानामूर्ध्वमूर्ध्वं स्थापना यथा— [५ ४ ३ २ १] एकको द्विके क्षिप्यते जातास्त्रयः । ते त्रिके क्षिप्यन्ते जाताः षट्, ते चतुष्के क्षिप्यन्ते जाता दश, ते च पञ्चके न क्षिप्यन्तेऽन्त्यपदत्वादिति प्रथमप्रक्षेपः । पुनश्चैकस्त्रिके क्षिप्यते जाताश्चत्वारः । ते षट्के क्षिप्यन्ते जाता दश । ते उपरिस्थिते दशके न क्षिप्यन्ते, पुनः पुनरन्त्यैकपदवर्जनादिति द्वितीयः प्रक्षेपः । पुनश्चैकश्चतुष्के क्षिप्यते जाताः पञ्च, ते उपरि स्थिते दशके न क्षिप्यन्ते प्रोक्तहेतोरेवेति तृतीयः प्रक्षेपः । चतुर्थस्तु प्रक्षेपो न क्रियते, तथाक्रियमाणेऽन्त्यैकपदमोचनलक्षणस्य विधेरसम्भवात् । अथ निष्पन्नस्य स्थापना— [५ १० १० ५ १] एककसंयोगाः पञ्च । द्विकसंयोगा दश । त्रिकसंयोगा दश । चतुष्कसंयोगाः पञ्च । पञ्चकसंयोगश्चैक इति । अनेनैव विधिना लब्धा द्वादशानां प्रतानामेककादिसंयोगाअङ्कतो लिख्यन्ते यथा—१२ ।६६।२२० ।४९५ ।७९२ ।९२४ ।७९२ ।४९५।२२० ।६६। १२ ।१। इति। इह चैककादिसंयोगसंख्याज्ञानाय करणान्तराण्यपि सन्ति, परमेकेनैव चरितार्थत्वाद्ग्रन्थगौरवकारित्वाच्च तानि न प्रदर्श्यन्ते ॥ ततः

१ "क्रमेण" इत्यपि ॥

किम्? इत्याह—इअ गाहाभणिअकरणलद्धाए वयाणं एक्कगदुगाइसंजोगसंखाए गुणिएसु अ तेसु देसचरणस्स भंगसंखा हवइ ॥ ये पूर्वमेककद्विकादिसंयोगेषु षट्षट्त्रिंशदादयो यथोत्तरं षड्गुणा व्रतप्रतिपत्तिभङ्गाः उक्ताः, ते गुण्यराशयः। तेषु चानन्तरोक्तगाथादर्शितकरणलब्धया गुणकारराशिरूपया एककद्विकादिसंयोगसंख्यया द्वादश षट्षष्ट्यादिकया यथाक्रमं गुणितेषु देशचरणस्य भङ्गसंख्या भवति। तथाहि—षड् द्वादशभिर्गुणिता जाता द्वासप्ततिः, एककसंयोगभङ्गाः। षट्त्रिंशत्षट्षष्ट्या गुणिता जातानि त्रयोविंशतिशतानि षट्सप्तत्यधिकानि, एते द्विकसंयोगभङ्गाः। एवं त्रिकादिसंयोगेष्वपि भङ्गसंख्या वाच्या, निष्पन्नानां च द्वादशानामपि राशीनामेकत्र मिलने देशचरणस्य भङ्गसंख्या भवति ॥ साम्प्रतमेषां भङ्गानां प्रतिपन्नोत्तरगुणाविरतसम्यग्दृष्टिलक्षणभङ्गद्वयसहितानां संख्यां विवक्षुराह—एएसिं भंगाणं पडिवन्नुत्तरगुणअविरयसम्मद्दिट्ठिलक्खणभंगदुगसहिआणं संखागाहा, जहा—तेरसकोडिसयाइं, चउरासीकोडि बारस य लक्खा। सत्तासीइसहस्सा, दुन्नि सया दोन्नि अब्भहिआ ॥१॥ स्पष्टम् ॥ नवरं प्रतिपन्नोत्तरगुणः केवलरात्रिभोजननिवृत्तोऽविरतसम्यग्दृष्टिः, केवलसम्यक्त्ववान्। अङ्कतो भङ्गानां स्थापना—१३८४१२८७२०२ एवं च द्वादशी देवकुलिका समस्तश्रावकव्रतविकल्पप्रमाणात्मिका सूत्रे साक्षादुक्ता, अनयैव युक्त्या एकाद्येकोत्तरव्रतवृद्धियुक्ता एकादश देवकुलिकाः स्वयमभ्यूह्याः। सर्वास्वपि च देवकुलिकासु प्रत्येकं त्रयस्त्रयो राशयः। आदौ गुण्यराशिः षट् षट्त्रिंशदादिः। मध्ये गुणकारराशिगाथादर्शितकरणलब्धैककादिसंयोगभङ्गसंख्यात्मकः, अन्ते चागतराशिः, बहिर्भागे तु चतुर्थः सर्वाग्रराशिरिति। स्थापना—

| | | |
|---|---|---|
| ६ | ९ | ५४ |
| ३६ | ३६ | १२९६ |
| २१६ | ८४ | १८१४४ |
| १२९६ | १२६ | १६३२९६ |
| ७७७६ | १२६ | ९७९७७६ |
| ४६६५६ | ८४ | ३९१९१०४ |
| २७९९३६ | ३६ | १००७७६९६ |
| १६७९६१६ | ९ | १५११६५४४ |
| १००७७६९६ | १ | १००७७६९६ |
| | | ४०३५३६०७ |

| | | |
|---|---|---|
| ६ | १० | ६० |
| ३६ | ४५ | १६२० |
| २१६ | १२० | २५९२० |
| १२९६ | २१० | २७२१६० |
| ७७७६ | २५२ | १९५९५५२ |
| ४६६५६ | २१० | ९७९७७६० |
| २७९९३६ | १२० | ३३५९२३२० |
| १६७९६१६ | ४५ | ७५५८२७२० |
| १००७७६९६ | १० | १००७७६९६० |
| ६०४६६१७६ | १ | ६०४६६१७६ |
| | | २८२४७५२४९ |

| | | |
|---|---|---|
| ६ | ११ | ६६ |
| ३६ | ५५ | १९८० |
| २१६ | १६५ | ३५६४० |
| १२९६ | ३३० | ४२७६८० |
| ७७७६ | ४६२ | ३५९२५१२ |
| ४६६५६ | ४६२ | २१५५५०७२ |
| २७९९३६ | ३३० | ९२३७८८८० |
| १६७९६१६ | १६५ | २७७१३६६४० |
| १००७७६९६ | ५५ | ५५४२७३२८० |
| ६०४६६१७६ | ११ | ६६५१२७९३६ |
| ३६२७९७०५६ | १ | ३६२७९७०५६ |
| | | १९७७३२६७४३ |

| | | |
|---|---|---|
| ६ | १२ | ७२ |
| ३६ | ६६ | २३७६ |
| २१६ | २२० | ४७५२० |
| १२९६ | ४९५ | ६४१५२० |
| ७७७६ | ७९२ | ६१५८५९२ |
| ४६६५६० | ९२४ | ४३११०१४४ |
| २७९९३६ | ७९२ | २२१७०९३१२ |
| १६७९६१६ | ४९५ | ८३१४०९९२० |
| १००७७६९६ | २२० | २२१७०९३१२० |
| ६०४६६१७६ | ६६ | ३९९०७६७६१६ |
| ३६२७९७०५६ | १२ | ४३५३५६४६७२ |
| २१७६७८२३३६ | १ | २१७६७८२३३६ |
| | | १३८४१२८७२०१ |

मरांधगनिक्षारिका चेयं गाथा—"एगतए छब्भंगा, निद्दिहा सावयाण जे सुत्ते। ते चिअ वयवुड्ढीए, सत्तगुणा छज्जुया कमसो ॥१॥" अयं भावः—एकस्मिन् व्रते तावत्षड् भङ्गाः। ते सप्तगुणाः षड्युता व्रतद्वयभङ्गा अष्टचत्वारिंशदित्यर्थः। , तेऽपि सप्तगुणाः षड्युता व्रतत्रयभङ्गा इत्यादि। यथा च षड्भङ्ग्यां एकाद्येकोत्तरमतवृद्ध्या दर्शिता द्वादश देवकुलिकाः एवं तदुत्तरभङ्गरूपैकविंशतिभङ्ग्यां तथा भगवत्यभिमतायां नवभङ्ग्यां तदुत्तरभङ्गरूपायामेकोनपञ्चाशद्भङ्ग्यां सप्तचत्वारिंशदधिकशतभङ्ग्यां च द्वादश द्वादश देवकुलिकाः स्वधियाऽभ्यूह्याः। सर्वत्राप्यादौ गुण्यराशयो यथायोगं नवाद्या यथायोगं नवादिगुणाः। मध्ये गुणकारराशयो गाथोक्तकरणलब्धा एककादिसंयोगसंख्यात्मकाः। अन्ते चागतराशयः। तत्संग्रहनिदर्शनार्थं चैता गाथाः—"इगवीसं खलु भंगा, निद्दिहा सावयाण जे सुत्ते। ते चिअ बावीसगुणा, इगवीसं पक्खिवेअव्वा ॥१॥ एगवए नव भंगा, निद्दिहा सावयाण जे सुत्ते। ते चिअ दसगुण काउं, नव पक्खेवंमि कायव्वा ॥२॥ इगुयालं ४९ खलु भंगा, निद्दिहा सावयाण जे सुत्ते। ते चिअ पन्नासगुणा, इगुयालं पक्खिवेअव्वा ॥३॥ सेयालं भंगसयं १४७, पच्चक्खाणंमि य १४८ गुणं काउं। सीयालसयेण १४७ जुयं, सव्वग्गं जाण भंगाणं ॥४॥" नवभङ्ग्यादिविचारसङ्ग्रहः पुनरयम्—"तिन्नि तिआ तिन्नि दुआ, तिन्निक्किक्का य हुंति जोगेसु। ति दु इक्कं ति दु इक्कं, ति दु इक्कं चेव करणाई ॥१॥" 'जोगेसु' इति योगेषु कायवाङ्मनोव्यापारलक्षणेषु करणकारणाऽनुमतिरूपेषु। 'करणाइं' इति करणानि मनोवाक्कायलक्षणानि। अत्रोत्तरभङ्गसंख्या यथा—"पढमे छब्भइ एगो १, सेसेसु पएसु तिअ ३ तिअ ३ तिअं ३ च। दो

१ अष्टचत्वारिंशद्व्रतभङ्गाः" इत्यपि। २ "दर्शिता" इति क्वचित्। ३ अतः परम्—"संयोगसंख्यात्मका पूर्वोक्ता एव" इत्येवंरूपोऽपि पाठः॥

नव ९–९ तिअ ३ दो नवगा ९–९, तिगुणिअ सीआलभंगसयं॥१॥" स्थापना।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | २ | २ | २ | १ | १ | १ | क० का० अ ॥ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ | म० व० का ॥ |
| १ | ३ | ३ | ३ | ९ | ९ | ३ | ९ | ९ | उत्तरभेदाः ४९ ॥ |

यथा षड्भङ्गी तदुत्तरभेदैकविंशभङ्गी च पूर्वं भाविता, तथा इयमपि नवभङ्गी तदुत्तरभेदैकोनपञ्चाशद्भङ्गी च भावनीया। एकोनपञ्चाशद्भङ्गी च कालत्रयेण गुणिता सप्तचत्वारिंशदधिकशतभङ्गी भवतीति प्रासङ्गिकमुक्तम्॥ इदानीं कियत्कर्मक्षये देशचरणं सर्वचरणं वा लभन्ते जीवाः ? इत्याह—सम्मत्तलाभकम्मट्ठिइए पलिओवमपुहत्ते खविए देसचरणं लहंति। तओऽवि संखिज्जसागरेसु खविएसु सव्वचरणंति॥ अयं भावः—पल्योपमासंख्येयभागन्यूनसागरोपमकोटिकोटिप्रमाणं कर्मस्थितौ सम्यक्त्वलाभः प्रोक्तः, तन्मध्यात्पल्योपमपृथक्त्वे क्षपिते देशचरणस्य लाभः, भूयोऽपि तन्मध्यात्संख्येयसागरोपमेषु क्षपितेषु सर्वचरणस्य लाभः॥

॥ इति समयसारटीकायां सम्यक्करणप्ररूपणो नाम नवमोऽध्यायः॥ ९॥

---

अथाराधनाविराधनाफलं निरूप्यते—

तत्रादौ सम्यग्ज्ञानादित्रयस्य सिद्धान्तप्रसिद्धां रत्नत्रयसंज्ञामाह—मरगयपउमरागाइलोगपसिद्धरयणेहिंतो

१" भङ्गी च भाविता तथाऽत्रापि भावना कार्या। एकोनपञ्चाशद्भङ्गी च काल–" इत्येवंरूप एव पाठो दृश्यते। २ "अतः परम्—यावत्यां कर्मस्थितौ सम्यक्त्वलाभ उक्तस्तन्म—" इत्येवंरूपोऽपि पाठो दृश्यते॥

विसिद्धगुणं गभं रयणतियं चुवइ ॥ मरकतादीनि रत्नान्यैहलौकिकस्यैव फलस्य साधकानि, इदं तु ज्ञानादित्रयं प्रभावशमितनम्र मरूत्पुरुषार्थपरस्य परमानन्दमयस्य मोक्षस्यापि साधकत्वातोऽशो विशिष्टगुणं रत्नत्रयमुच्यते ॥ अथैतत्त्रय समस्तं वा मोक्षसाधकमित्याशङ्क्याह—एएसिं तिण्हंपि परोप्परावेक्खाए मोक्खलक्खणं फलं साहिज्जइ, न निरवेक्खयाए ॥ अयं भावः—ज्ञानेन ज्ञाततत्त्वः संजाततीव्रश्रद्धः स्वशक्त्या यतमानो मोक्ष-मप्नोति नान्यथा ॥ व्यस्तानां फलाभावे दृष्टान्तानाह—नाणचरणजुत्तोवि दंसणरहिए अंगारमद्दए अभ-व्वोत्ति वुच्चइ, नाणदंसणजुत्तावि चरणरहिआ कण्हसेणिअसच्चइपमुहा अनरगइं पत्ता । तम्हा तिण्हं-पि मज्झाओ गग्गाहिज्जइ ॥ स्पष्टम् । नवरं "बुच्चइ" इति श्रूयते । इह च प्रवचने द्वौ नयौ ज्ञाननयः क्रियानयश्च । तत्र य श्रद्धानोत्थं ज्ञानमेव मुक्तिप्रापकतया प्रतिजानीते स ज्ञाननयः । यस्तु चारित्रमेव सिद्धिनिबन्धनं ब्रूते स क्रियानयः । तत्र ज्ञाननयस्येदं मतम्—"विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता । मिथ्याज्ञानात्प्रवृत्तस्य, फलासंवाददर्शनात् ॥ १ ॥" तथा चागमः—"पढमं नाणं तओ दया" इत्यादि ॥ अत एव केवलानामगीतार्थानां विहारो निषिद्धः । अन्यच्च दीक्षाप्रपन्नोऽप्यर्हन् केवलज्ञानोत्पत्तिं विना नापवर्गं प्राप्नोति, ततो ज्ञानस्यैव प्राधान्यम् । अयं च ज्ञान-नयः सम्यक्त्वश्रुतसामायिके एव प्राधान्यमिच्छति, देशविरतिसर्वविरतिसामायिके तु गुणभूते एव मन्यते, तत्कार्यत्वात् । तथा क्रियानयमतम्—"क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम् । यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात् सुखितो भवेत् ॥२॥" तथा "सयं पंडिओ भारवाही" इत्याद्यागमोऽप्येवमेव व्यवस्थितः । तथा प्राप्तकेवलोऽप्यर्हन् तावन्मुक्तिमुपैति यावदरि-

अट्टंनि ॥ विपरीतप्ररूपणादिभिर्विराध्य चतुरन्तं चतुर्विभागं नरकादिभेदेन तदेव स्वार्थेऽपि चातुरन्तं संसारकान्तारं विविधदुःखविटपिशतसहस्रदुस्तरं भवगहनमनुपरावर्त्तन्ते भ्रमन्ति ॥ अथ कर्त्तव्योपनिषदमाह—तम्हा अणंतसुयल-कंखीहिं एअस्स आराहणाए चेव उज्जमेअव्वंति एसे अट्ठे परमट्ठे ॥ यस्मादेवं तस्मादनन्तसुखाभिलाषुकैरेतस्य रत्नत्रयस्याराधनायामेवोद्यन्तव्यमुद्यमः कार्य इत्येषोऽर्थः परमार्थतत्त्वरूपः सुगतिहेतुत्वात् ॥ साम्प्रतं शार्दूलविक्रीडितवृत्तेन ज्ञानादित्रयस्य मोक्षलक्षणं फलं तदुपादानोपदेशं चाह—जा तित्थेसरसासणे कुसलया नाणंति तं बुच्चए, जा तत्थेव रुई अईव विमला सद्दंसणं तं पुणो। चारित्तं तु इचित्ति तं विरमणं सावज्जजोगेहि जं, एअं भो! रयण-त्तिगं सिवफलं गिण्हेह सव्वे अणा! ॥ १ ॥ निगदसिद्धम् ॥ निगमयन्नाह—समयस्स सारमेअं, अप्पपराणुग्ग-हाय संगहिअं। जाणइ मन्नइ पालइ, जो तस्स करट्ठिआ सिद्धी ॥ १ ॥ प्रकटोऽर्थः। नवरं जानीते मन्यते पालयतीति क्रमेण ज्ञानदर्शनचारित्रयुक्तता मोक्षः। सिद्धिशब्दोपादानं मङ्गलार्थम् ॥ सम्प्रति सूत्रकारो देवानन्दनामा स्वात्मनो ज्ञानलोचनोन्मीलनपीयूषाञ्जनमहिम्नां समुल्लासितश्रीदेवचन्द्रगुरुपट्टधाम्नां श्रीपद्मप्रभाचार्यनाम्नां स्वगुरूणां स्तुत्याश्लिष्टां तीर्थकरचरणस्तुतिमाह—

लोआण देवचंद व्व हिया पउमप्पहा जिणेसपया। देवाणंदसमुब्भहेऊ सपयं सियं दिन्तु ॥ १ ॥

१ "तदुपादानोपदेशं" इत्यपि। २ "चारित्राराधना मोक्षः" इत्यपि। ३ "जिनेशस्तुतिमाह" इत्यपि ॥

मिथो वृत्तौ" (सि० ८-१-४) इति प्राकृतसूत्रेण ह्रस्वः। यद्वा जिनानामर्हतामीः लक्ष्मीः सर्वज्ञत्वसद्भूतवादित्वपरमातिशयवत्त्वादिर्महिमा तां 'षोंच् अन्तकर्मणि' इति स्यन्ति अन्तं नयन्ति तत्तदसद्भूतदोषोद्घोषणैरिति जिनेशाः कुतीर्थिकास्तान् प्रकर्षेण घ्नन्ति खण्डयन्तीति जिनेशप्रदाः। अनेन परमतापोहकत्वं प्रदर्शितम्। अथवा जिनोऽर्हद्बुद्धविष्णुष्विति वचनात्, जिनो विष्णुः ईशः शम्भुस्तद्वत्पुरुषोत्तमत्वादिना गणाधिनाथत्वादिना च प्रकृष्टा ता लक्ष्मीर्येषां ते जिनेशप्रताः। अथवा 'इणच् गतौ' चयणमेषः जिनानामर्हतामेषो गतिर्जिनैषो मुक्तिरिति तात्पर्यं, जिनानां गतिचतुष्कपरिहारेण मुक्तिगतेरेव भावात्, ततश्च जिनैषाय मुक्तिगतये प्रयान्ति तत्तज्जिनोक्तविधिविधानमार्गेण गच्छन्तीति जिनैषप्रयाः, मोक्षमार्गाराधका इत्यर्थः। अथवा 'ईषि गतिहिंसादर्शनेषु' इति। ईषणमीषो हिंसा इः कामस्तस्य ईषः, सन्धौ कृते ईषः, कामवध इत्याशयः ततश्च जितवद्बुद्धवत् ईषाय कामवधाय प्रयस्यन्ति प्रयतन्ते वेति क्विपि जिनेषप्रयसः जिनेषप्रयतो वा। "अन्त्यव्यञ्जनस्य" (सि० ८-१-११) इति प्राकृते अन्त्यव्यञ्जनलुक्, स्मरपराभवनोद्युक्ता इत्यर्थः। तथा देवानन्दसमुन्नतिहेतवः, देवानन्दसूरिनाम्नः स्वशिष्यस्य समुन्नतिकराः सम्यग्बोधमहज्ञानादिप्रापणपदस्थापनप्रवणस्वगुरुप्रसादमूला हि शिष्यस्य सर्वापि गुणवृद्धिः॥

॥ इति समयसारटीकायामाराधनाविराधनाफलनिरूपणो नाम दशमोऽध्यायः ॥ १० ॥

॥ समाप्तेयं समयसारप्रकरणटीका ॥

जिना रागादिजेतृत्वात्सामान्यकेवलिनश्छद्मस्थवीतरागाश्च, तेषामीशास्तीर्थकरनामकर्मोदयेनोत्कृष्टत्वाज्जिनेशा अर्हन्तस्तेषां पदाब्जानि सततं निरन्तरं शिवं मोक्षं क्षेमं सुखं वा ददतु। जिनेशपदान् विशिनष्टि—'देवचंदव' इति 'देवस्तु नृपतौ तोयदे सुरे' इतिवचनाद्देवो जीमूतः, चन्द्रः सुधांशुः, देवो हि सकलसस्यादिपदार्थप्रादुर्भावनिबन्धनत्वात्, चन्द्रस्तु तापनिर्वापकत्वादोषधीवृद्धिहेतुत्वाच्च लोकानां हित इति प्रतीतम्। ततश्च तद्वल्लोकानां हिताः पथ्याः जिनेशपदार्चनस्मरणादिना समस्तदुःखोच्छेदात्कल्याणमालोपलब्धेश्च। तथा पद्मप्रभास्तामरससदृशाः, पदानां पद्मैरुपमेयत्वात्। तथा देवानां चतुर्निकायानां सुराणामानन्दस्य समुत्पत्तौ हेतवः। च्यवनजन्मदीक्षाज्ञाननिर्वाणकल्याणकेषु महामहविधित्सया समवसरणे देशनाशुश्रूषया सरभसमुपसृत्य वन्दमानानां देवानां जिनपदाः प्रमोदं प्रोच्छ्राययन्तीति प्रतीतमेव। अथ गुरुस्तुतिपक्षः। पद्मप्रभाः श्रीपद्मप्रभनामानो गुरवः सततं शिवं ददत्विति प्राग्वत्। कीदृशा इत्याह—देवचन्द्रा इव लोकानां हिताः। यथा श्रीदेवचन्द्रनामानः स्वगुरवो मिथ्यात्वनिरसनसम्यक्त्वन्यसनादिना लोकानां हिताः पथ्याः बभूवुस्तथा इमेऽपीत्यर्थः। तथा जिनेशपदाः जिनेशा अर्हन्तः पदं त्राणं येषां ते तथा, सदा तदाराधनप्रवृत्तत्वात्। अथवा जिनेशप्रजा जिनेशानां प्रजा अपत्यं, जैनर्षीणां सर्वज्ञपुत्रकत्वेन रूढत्वात्। अथवा जिने साप्रदाः जिने इति सप्तम्यन्तं पृथक्पदं अर्हतीत्यर्थः, सां लक्ष्मीं प्रददतीति साप्रदाः, हेतूदाहरणादिभिर्भगवन्मतदृढीकारकरणात्, एतेन स्वपक्षस्थापकत्वमुक्तम्। 'दीर्घह्रस्वौ

१ "चन्द्रः पीयूषकिरणः। देवो हि सकलसस्यादिमूलत्वात्, चन्द्रस्तु" इत्यपि पाठः। २ "सकलदुःखो" इत्यपि पाठः। ३ "महोत्सवविधित्सया" इत्यपि पाठः॥

मिथो पूर्णौ" (सि० ८-१-४ ) इति प्राकृतसूत्रेण ह्रस्वः। यद्वा जिनानामर्हतामीः लक्ष्मीः सर्वज्ञत्वमद्भुतत्वादित्वपरमातिशय- यत्वादिर्महिमा तां 'षोन्त् अन्तकर्मणि' इति स्यन्ति अन्तं नयन्ति तत्तदसद्भूतदोषोद्घोषणैरिति जिनेसाः कुतीर्थिकालान्ह प्रकर्षेण घ्नन्ति खण्डयन्तीति जिनेसमदाः। अनेन परमतापोहकत्वं प्रदर्शितम्। अथवा जिनोऽर्हद्बुद्धविष्णुष्विति वचनात्, जिनो विष्णुः ईशः शम्भुस्तद्वत्पुरुषोत्तमत्वादिना गणाधिनाथत्वादिना च प्रकृष्टा सा लक्ष्मीर्येषां ते जिनेशमताः। अथवा 'इणच् गतौ' एतणमेयः जिनानामर्हतामेयो गतिर्जिनैयो मुक्तिरिति तात्पर्यं, जिनानां गतिचतुष्कपरिहारेण मुक्तिगतेरेव भावात्, ततश्च जिनैयाय मुक्तिगतये प्रयान्ति तत्तज्जिनोक्तविधिविधानमार्गेण गच्छन्तीति जिनैयप्रयाः, मोक्षमार्गाराधका इत्यर्थः। अथवा 'ईषि गतिहिंसादर्शनेषु' इति। ईषणमीषो हिंसा इः कामस्तस्य ईषः, सन्धौ कृते ईषः, कामवध इत्याशयः ततश्च जिनवद्बुद्धवत् ईषाय कामवधाय प्रयस्यन्ति प्रयतन्ते वेति क्विपि जिनेषप्रयसः जिनेषप्रयतो वा। "अन्त्यव्यञ्जनस्य" (सि० ८-१-११) इति प्राकृते अन्त्यव्यञ्जनलुक्, स्मरपराभवनोत्सुका इत्यर्थः। तथा देवानन्दमनुप्रविहितयः, देवानन्दसूरि- नाम्नः स्वशिष्यस्य समुन्नतिकराः सम्यग्होपमहज्ज्ञानादिमापणपदस्थापनप्रवणस्वगुरुप्रसादमूला हि शिष्यस्य सर्वापि गुणवृद्धिः॥

॥ इति समयसारटीकायामाराधनाविराधनाफलनिरूपणो नाम दशमोऽध्यायः ॥ १० ॥

॥ समाप्तेयं समयसारप्रकरणटीका ॥

## ॥ अथ प्रशस्तिः ॥

श्रीपद्मप्रभगणपरपदपद्मद्वन्द्वराजहंस इमाम्। देवानन्दो व्यतनुत, टीकां स्वोपज्ञसमयसारस्य ॥ १ ॥ संदृभ्य समयसारप्रकरणमेतत्सटीकमपि मया। यत्पुण्यं तेन भवत्वखिलजनो जिनमते भक्तः ॥ २ ॥ अर्हन्तः सिद्धाः साधुगणः केवलिमतस्तथा धर्मः। मङ्गलरूपा लोकोत्तमाः सदा सन्तु मे शरणम् ॥ ३ ॥ निधिरसयुगशशि १४६९ संख्ये, वर्षे विक्रमनृपात्सहसि मासे। शुक्ले त्रयोदशतिथौ, सौम्यदिनेऽपूरि टीकेयम् ॥ ४ ॥ उत्सूत्रमत्र जातं, यन्मतिमान्द्यादिभिः समग्रं तत्। संशोधयन्तु वाढं, बहुश्रुता मयि कृपां कृत्वा ॥ ५ ॥ यस्याः प्रसादतो भृशगम्भीरस्यापि समयसलिलनिधेः। पारं प्रयान्ति भव्याः, श्रुतदेवी श्रेयसे साऽस्तु ॥ ६ ॥

॥ समाप्तमिदं स्वोपज्ञटीकोपेतं समयसारप्रकरणम् ॥

॥ अर्हम् ॥

# ॥ समयसारपगरणं ॥

सव्वष्णु मोक्खमग्गंति, चउव्वग्गंमि उत्तमं । सुहं जओ तिवग्गम्मि, दिट्ठमेगंतिअं न हु ॥ १ ॥
धम्माउ हेमनिअलो-वमं जीवा समज्जिउं । पुण्णकम्मं भवे ठंति, सुहाभासेण गव्विआ ॥ २ ॥
अत्थाउ पयडं चेव, बहुधंधाइअं दुहं । लहंता किर दीसंति, अन्नाणे रक्खणेऽधिअं ॥ ३ ॥
लसंतसुहलेसस्स, पेरंतविरसस्स य । कहं पसंसा कामस्स, जुत्ता दुग्गइहेउणो ? ॥ ४ ॥
जम्हाऽणंतसुहं खीण-सव्वदुहसंतइं । मोक्खं चिअ पसंसंति, जरामरणवज्जिअं ॥ ५ ॥
लहंति तं पुणो सम्म-नाणदिट्ठिचरित्ताओ । आराहिआउ काऊण, सव्वकम्मक्खयं जिआ ॥ ६ ॥

तत्थ सव्वन्नुपरूविआणं जहट्ठिआणं तत्ताणं जे अवबोहे तं सम्मन्नाणंति भण्णइ ॥ तत्ताणि पुण सत्त पण्णत्ताणि, तंजहा—जीवा अजीवा आसवे बंधे संवरे निज्जरा मोक्खे अ ॥ तत्थ जीवा दुविहा, तंजहा—सिद्धा संसारिणो अ ॥ तत्थ सिद्धा अणंतनाणदंसणवीरिअसोक्खलक्खणएगसहावभावाओ एगविहावि अणंतरपच्छिमभवरूवोवाहिभेआओ पन्नरसविहा, तंजहा—तित्थसिद्धा १ अतित्थसिद्धा २ तित्थगर-

सिद्धा ३ अतित्थगरसिद्धा ४ सयंबुद्धसिद्धा ५ पत्तेअबुद्धसिद्धा ६ बुद्धबोहिअसिद्धा ७ इत्थिलिंगसिद्धा ८ पुरिसलिंगसिद्धा ९ नपुंसगलिंगसिद्धा १० सलिंगसिद्धा ११ अन्नलिंगसिद्धा १२ गिहिलिंगसिद्धा १३ एगसिद्धा १४ अणेगसिद्धा य १५ ॥ संसारिणो पुण एगविहदुविहाइभेएहिं अणेगहा पण्णत्ता ॥ तंजहा—एगविहा सव्वेसिंपि सामन्नेणं उवओगलक्खणभावाओ ॥ दुविहा तसा थावरा य ॥ अहवा संववहारिआ असंववहारिआ य ॥ तत्थ जे अणाइकालाओ आरब्भ सुहुमनिगोएसुं चिअ चिट्ठंति न कयाइ तस्साइभावं पत्ता ते असंववहारिआ ॥ जे पुण सुहुमनिगोएहिंतो निग्गया सेसजीवेसु उप्पन्ना ते संववहारिआ । ते अ पुणोऽवि सुहुमनिगोअत्तं पत्तावि संववहारिअ चिअ भण्णंति ॥ तिविहा थीपुंनपुंसगवेअभेएणं ॥ संजयअसंजयसंजयासंजयभेएण वा ॥ भव्वाभव्वजाइभव्वविगप्पेण वा ॥ तत्थ भव्वा सिद्धिगइजोग्गा, इयरे अभव्वा, जाइभव्वा पुण ते जे जाईए भव्वा न उण कयावि सिज्झिहिंति । भणिअं च—"सामग्गिअभावाओ, ववहारिअरासिअप्पवेसाओ । भव्वावि ते अणंता, जे सिद्धिसुहं न पावंति ॥ १ ॥" चउव्विहा नारयाइगइचउक्कभावओ ॥ पंचविहा इगदुतिचउपंचिंदिअत्तेणं ॥ छव्विहा पुढवीआउतेउवाउवणस्सइतसकायपज्जवाए ॥ सत्तविहा जहा—किण्हाइछल्लेसापरिणया, अजोगिकेवलिणो अलेसा य ॥ अट्ठविहा जहा—अंडया १ पोअया २ जराउआ ३ रसया ४ संसेइमा ५ संमुच्छिमा ६ उब्भिआ ७ उववाइआ य ८ ॥ नवविहा जहा—पुढवी १ आऊ २ तेऊ ३ वाऊ ४ वणस्सई ५ बितिचउपंचिंदिआ ९

य ॥ एए चिय पंचिंदिआणं सन्निअसन्निभेअविवक्खाए दसविहा ॥ एक्कारसहा जहा—सुहुमबायरेहिं दुभेआ एगिंदिआ २ बितिचउरिंदिआ ५ जलथलनहयरभेआ पंचिंदिअतिरिआ ८ मणुआ ९ देवा १० नारया य ११ ॥ बारसविहा पुण पुढवाइछण्हं छक्कायाणं पज्जत्तापज्जत्तेहिं १२ ॥ तेरसविहा जहा—एगे सुहुमनिगोअरूवे असंववहारिए सेए बारस संववहारिआ य । ते अ इमे—पुढवीआउतेउवाउनिगोआ सुहुमबायरभेअं दुदुभेआ पत्तेयवणस्सई तसा य १३ ॥ चउदसविहा जहा—सुहुमबायरा एगिंदिआ २ बितिचउरिंदिआ ५ असन्निसन्निभेआ पंचिंदिआ ७ एए सत्तवि पज्जत्ता अपज्जत्ता य ॥ १४ ॥ अहवा मिच्छदिट्ठी १ सासायणसम्मदिट्ठी २ सम्मामिच्छदिट्ठी ३ अविरयसम्मदिट्ठी ४ देसविरए ५ पमत्तसंजए ६ अपमत्तसंजए ७ निअट्टिबायरसंपराए ८ अनिअट्टिबायरसंपराए ९ सुहुमसंपराए १० उवसंतकसायवीअरायछउमत्थे ११ खीणकसायवीअरायछउमत्थे १२ सजोगिकेवली १३ अजोगिकेवली अत्ति १४ चउदसगुणट्ठाणवट्टिहिं चउदसहा जीवा ॥ एवं बुद्धिमन्तेहिं सिद्धान्ताणुसारेण अणेगहा जीवभेआ परूविअव्वा ॥ अह एएसिं जीवाणं संखेवओ आउट्ठिई परूविज्जइ, तंजहा—पुढवीए बावीसवाससहस्साइं ठिई पण्णत्ता, जलस्स सत्तवाससहस्सा, अगणिस्स तिण्णि दिणाणि, वाउस्स पत्तेअवणस्सइणो अ तिण्णि दस य वाससहस्साइं ॥ एसा सव्वावि बायरपज्जत्ताणं एएसिं उक्कोसा ठिई ॥ अह तसाणं बेइंदियाईणं भण्णइ—बेइंदिआणं बारस वासा, तेइंदिआणं अउणापन्नदिणाणि, चउरिंदिआणं छम्मासा ॥ असन्निपंचिंदिअतिरिआणं जलयराणं

पुव्वकोडी, थलयराणं खयराणं च चउरासीई थावत्तरी अ वाससहस्साइं ॥ सन्निपंचिंदिअतिरिआणं जलयरथलयरखयराणं जहासंखं पुव्वकोडी, पलिओवमतिगं, पलिओवमासंखभागे अ ॥ गब्भयमणुआणं तिन्नि पलिओवमाणि ॥ जहन्ना पुण सव्वेसिंपि अंतोमुहुत्तं ॥ सव्वेसिं अपज्जत्ताणं उक्कोसावि अंतोमुहुत्तं ॥ सव्वेसिं सुहुमाणं निगोआणं तु बायराणंपि पज्जत्ताणंपि तहेव ॥ सुरनेरइआणं उक्कोसा तित्तीसं सागरोवमाणि, जहन्ना दसवाससहस्साणि ॥ ओगाहणा पुण पत्तेअवणप्फइवज्जाणं सव्वेसिं एगिंदिआणं अंगुलस्स असंखिज्जे भागे ॥ पत्तेअवणप्फईणं जोअणसहस्सं साहिअं ॥ बेइंदिआणं बारस जोअणाणि । तेइंदिआणं तिण्णि कोसा । चउरिंदिआणं चउरो कोसा ॥ असन्निसन्निपंचिंदिअतिरिआणं जोअणसहस्सं ॥ सन्निमणुआणं तिण्णि कोसा ॥ एसा सव्वावि पज्जत्ताणं उक्कोसा ओगाहणा भणिआ । पज्जत्ताणं जहन्ना अपज्जत्ताणं तु दुविहावि अंगुलाऽसंखेज्जभागे ॥ देवाणं सत्त रयणी । नेरइआणं पंचधणुसयाणि ॥ ठिइओगाहणाविसया विसेसा कायठिई पाणा पज्जत्तीओ लेसाओ इच्चाइअं सुअसागराओ विआणिअव्वं ॥ इआणिं मिच्छदिट्ठिपभिईणं चउद्दसण्हं गुणठाणाणं ठिइकाले दंसिज्जइ ॥ मिच्छत्तस्स तिविहे ठिइकाले पण्णत्ते, तंजहा—अणाइअणंते १ अणाइसंते २ साइसंते अ ३ ॥ तत्थ अभव्वा पढमे भंगे, भव्वा दुइअतइएसु ॥ अणाइमिच्छदिट्ठिस्स भव्वस्स सम्मत्तलाभे मिच्छत्तस्स अंतभावाओ अणाइसंतत्तं । जे पुण लद्धसम्मत्ते मिच्छत्तं गच्छइ, मिच्छत्ते अ जहन्नेणं अंतोमुहुत्तं उक्कोसेणं देसूणमद्धपुग्गलपरिअट्टं ठाऊणं पुणोवि सम्मत्तं

रगाइ. मस्स माइमंनं मिच्छत्तांनि ॥ सासायणं छावलीपमाणं, तं च अणंताणुबंधिकसाओदए उवसमिअ-सम्मत्तं वमंतस्स मिच्छत्तमपत्तस्स भवइ ॥ अविरयसम्मत्तस्स ठिइकाले साहिआइं तित्तीसं सागरोव-माइं ॥ देसविरयस्स सजोगिकेवलिणो अ देसूणा पुव्वकोडी ॥ अजोगिकेवलिस्स लहुपंचक्खरमेत्तं ॥ पमत्तस्स पमत्ताईणं च सत्तण्हं अंतोमुहुत्तं ॥ एसो उक्कोसओ ठिइकाले ॥ जहन्नओ पुण सासायणस्स पम-त्ताईणं च छण्हं एगं समयं ॥ अजोगिकेवलिस्स अजहन्नमणुक्कोसे पुव्वुत्ते च्चिअ काले ॥ सेसाणं छण्हं अंतोमुहुत्तं ॥

॥ इइ जीवतत्तनिरूवणो नाम समयसारस्स पढमो अज्झाओ ॥ १ ॥

---

अजीवा पंचविहा पन्नत्ता, तंजहा—धम्मत्थिकाए १ अधम्मत्थिकाए २ आगासत्थिकाए ३ पुग्गलत्थि-काए ४ काले ५ अ ॥ एए पंचवि जीवत्थिकाएण समं छ दव्वाइं भणंति ॥ सव्वेऽवि उप्पायवयधुव्वस-हावा ॥ कालं विणा सप्पएसत्तेणं अत्थिकाया ॥ पुग्गलवज्जं अरूविणो ॥ जीववज्जं अचेअणा अकत्तारा ॥ तत्थ गइपरिणयाणं जीवपुग्गलाणं गइउवट्ठंभनिमित्तं धम्मत्थिकाए । ठिइपरिणयाणं ठिइउवट्ठंभहेऊ अधम्मत्थि-काए । सव्वगाहदाणगुणमागासं । पूरणगलणधम्माणो पुग्गला ॥ ते अ फरिसरसगंधवण्णोववेआ ॥ सद्दबंध-सुहुमथूलसंठाणभेयतमच्छायाउज्जोआतवपज्जायरूवा ॥ कम्मसरीरमणभासाआणपाणसुहदुक्ख-जीवियमरणोवग्गहहेऊ नायव्वा ॥ काले वत्तणापरिणामाइलक्खणो ॥ जीवा नाणदंसण…

म्मागासाणि दव्वट्ठयाए एक्किक्काणि ॥ पुग्गला अद्धासमया जीवा य अणंता ॥ पएसट्ठयाए धम्माधम्माणं एगजीवस्स य लोगागासतुल्ला असंखा पएसा ॥ आगासस्स अणंता ॥ पुग्गलाणं परमाणुवज्जाणं संखिज्जा असंखिज्जा अणंता य ॥ धम्माधम्मा कसिणे लोगे चिट्ठंति ॥ आगासं लोगे अलोगेऽवि ॥ जोइसिअगइकिरिआकए काले माणुस्सलोगे ॥ पुग्गला जीवा य सव्वलोगे ॥ एगाइपएसावगाहिणो पुग्गला, लोगासंखिज्जभागाइअवगाहिणो जीवा ॥ एए चिअ धम्माइआ पंच अजीवा सपडिभेआ चउद्दस हवंति, तंजहा—धम्माधम्मागासाणं दव्व १ देस २ पदेस ३ कप्पणाए तिण्णि तिण्णि भेआ एवं नव, दसमे काले, पुग्गलाणं च खंध १ देस २ पएस ३ परमाणु ४ लक्खणा चउरो भेआ ॥

॥ इइ अजीवतत्तनिरूवणो नाम समयसारस्स बीओ अज्झाओ ॥ २ ॥

---

सुभासुभकम्मोवादाणनिदाणं आसवे ॥ से बायालीसविहे पण्णत्ते, तंजहा—पंच इंदिआणि, चउरो कसाया, पंच अव्वयाणि, तिण्णि जोगा, पणवीसं किरिआओत्ति ॥ तत्थ इंदिआणि फरिसणाईणि ॥ कसाया कोहाइओ ॥ अव्वयाणि हिंसाईणि ॥ जोगा मणवयणकायाणं वावारा ॥ किरिआओ जहा—काइआ १ अहिगरणिआ २ पाओसिआ ३ पारितावणिआ ४ पाणाइवाइआ ५ आरंभिआ ६ पारिग्गहिआ ७ मायावत्तिया ८ मिच्छादंसणवत्तिया ९ अप्पच्चक्खाणकिरिआ १० दिट्ठिआ ११ पुट्ठिआ १२ पाडु-

किआ १३ सामंतोवणिवाइआ १४ नेसत्थिआ १५ साहत्थिआ १६ आणवणिआ १७ वेआरणिआ १८ अणाभोगवत्तिआ १९ अणवकंखवत्तिया २० पओगकिरिआ २१ समुदाणकिरिआ २२ पेज्जवत्तिया २३ दोसवत्तिया २४ इरियावहिआ २५ य ॥ एवं सामन्नेणं परूविआ आसवा । एण्हिं विसेसेणं नाणावरणाइनिस्साए परूविज्जंति ॥ तंजहा—नाणदंसणविग्घपओसनिण्हवमच्छरंतरायासायणोवघाया नाणदंसणावरणाणं आसवा ॥ देवपूआगुरुभत्तिसरागसंजमदेससंजमपरादाणदयाखमाबालतवअकामनिज्जराओ सायवेअणीअस्स ॥ दुक्खसोगतावअकंदणवहपरिदेवणाणि सपरोभयत्थाणि असायवेअणीअस्स ॥ जिणसुअसंघदेवधम्मावण्णवायउम्मग्गदेसणमग्गनासणाणि दंसणमोहस्स ॥ कसाओदयाओ तिव्वे परिणामे चारित्तमोहस्स ॥ पंचिंदिअवहमंसाहारबहुआरंभपरिग्गहा नेरइआउअस्स । अट्टज्झाणससल्लत्तगूढचित्ताणि तिरिआउअस्स । अप्पारंभपरिग्गहत्तमद्दवअज्जवमज्झिमपरिणामा मणुआउअस्स । सरागसंजमदेससंजमअकामनिज्जराबालतवकल्लाणमित्तसंजोगसम्मत्ताणि देवाउअस्स ॥ सरलत्तसंसारभीरुत्तसाहम्मिअसमत्तिभाओ सुहनामस्स, विवरीआ असुहनामस्स ॥ अरिहंतवच्छल्लाई वीसं आसवा तित्थयरनामस्स ॥ मयरहिअत्तविणीअत्तगुणवंतपसंसाओ उच्चगोअस्स, विवरीआ नीअगोअस्स ॥ जिणपूआविग्घकरणहिंसाईआ विग्घस्स ॥ एए अ पइकम्मं पडिनिअया आसवा ठिइअणुभागबंधाविक्खाए विण्णेआ । पगइपएसबंधाविक्खाए पुण अविसेसेणं सव्वेऽवि सव्वकम्माणं आसवा भवंति ॥ जओ सिद्धंते अट्ठविहे सत्तविहे

लविहइ एगविहं वा बंधे भणिए, नो पुण पडिनिअयस्स कम्मस्स बंधे ॥ तत्थ मिच्छद्दिट्ठिपभिईणं अपमत्तंताणं मीसवज्जाणं आउबंधे अट्ठविहे, अन्नहा सत्तविहे ॥ मिस्सनियट्टिअनियट्टिबायराणं सत्तविहे ॥ सुहुमसंपरायस्स मोहाउवज्जे छव्विहे ॥ उवसंतमोहाईणं तिण्हं सायस्स चिअ बंधाओ एगविहे ॥ अजोगिकेवली अबंधगे ॥

॥ इइ आसवतत्तनिरूवणो नाम समयसारस्स तइओ अज्झाओ ॥ ३ ॥

मिच्छादंसणअविरइपमायकसायजोगेहिं बंधहेऊहिं जीवस्स कम्मपुग्गलाणं सिलेसे बंधे ॥ से चउव्विहे पण्णत्ते, तंजहा—पगइबंधे १ ठिइबंधे २ अणुभागबंधे ३ पएसबंधे ४ अ ॥ तत्थ नाणावरणदंसणावरणवेअणिज्जमोहआउनामगोअंतरायाणं नाणच्छायणाई जे सहावे सा पगई ॥ ठिई कम्मदलिअस्स कालनिअमे, जहा—नाणदंसणावरणवेअणिज्जंतरायाणं उक्कोसा ठिई पत्तेअं तीसं सागरोवमकोडाकोडीओ, सत्तरी मोहस्स, वीसं नामगोआणं, आउस्स पुण तित्तीसं सागरोवमाणि ॥ जहन्ना ठिई वेअणीअस्स बारस मुहुत्ता, नामगोआणं अट्ठ, सेसाणं अंतोमुहुत्तं ॥ सुहासुहाणं सुरनरतिरिआउवज्जाणं सव्वाणं कम्मपयडीणं जिट्ठठिई अइसंकिलेसेण बज्झइ जहन्ना विसोहीए त्ति ॥ अणुभागे अणुभावे विपागे रसेत्ति एगट्ठा ॥ से असुहाणं पयडीणं निंब व्व असुहे, सुहाणं उच्छु व्व सुहे त्ति पयडीणं सुहासुहविभागे परूविज्जइ ॥ सायवेअ-

णीअं १। सुरनरतिरिआणं आउआइं ३। उच्चगोअं १। सत्तत्तीसं नामपयडीओ, तंजहा—मणुआणं गई १ आणुपुव्वी अ २, देवाणं गई ३ आणुपुव्वी अ ४, पंचिंदिअजाई ५, ओरालिआईणि पंच सरीराणि १०, आइल्लाणं तिण्हं तिण्णि अंगोवंगाणि १३, पढमं संहणणं १४, पढमं संठाणं १५, सुहा वण्ण १६ गंध १७– रस १८ फासा १९, सुहविहगगई २०, अगुरुलहु २१ पराघाय २२ ऊसासा २३ ऽऽयवु २४ ज्जोअ २५ निम्माण- २६ तित्थयराणि २७, तसदसगं च ३७, एआओ सुहाओ बायालीसं पुण्णपयडीउत्ति रूढाओ ॥ पंच नाणा- वरणाणि ५, नव दंसणावरणाणि ९, मिस्ससम्मत्ताणं बंधाभावाओ छव्वीसमेव मोहे २६, पंच अंतरा- याणि ५, एआओ पणयालीसं ४५ घाइकम्मपयडीओ। असायवेअणीअं १। नेरइआउअं १। नीअगोअं १। चउतीसं नामपयडीओ, तंजहा—तिरिआणं गई १ आणुपुव्वी अ २, नेरइआणं गई ३ आणुपुव्वी अ ४, एगिंदिआईओ चउरो जाईओ ८, पढमवज्जाणि पंच संहणणाणि १३, पंच संठाणाणि अ १८, असुहा व- ण्णगंधरसफासा २२, असुहविहगगई २३, उवघायं २४, थावरदसगं च ३४। एवं सव्वग्गेणं असुहाओ बा- सीई पावपयडित्ति भण्णंति ॥ निंबुच्छुपमुहाणं सहजे रसे एगट्ठाणिए, से चिअ कुतिचउभागपमाणे कढिए गम्भागावसेसे दुट्ठाणिआइए होइ, एसा उवमा पयडिरसस्स भणिआ ॥ पव्वयभूमियालुयाजलरेहातुल्ले- हिं कसाएहिं असुहाणं जहाकमं चउतिदुएगट्ठाणिए रसे बज्झइ। सुहाणं तु वालुआजलरेहातुल्लेहिं चउ- ट्ठाणिए भूमिरेहातुल्लेहिं तिट्ठाणिए पव्वयरेहातुल्लेहिं दुट्ठाणिए एगट्ठाणिए नत्थि ॥ चउसंजलणपंचंतराय-

पुंवेअमइसुयओहिमणनाणचक्खुअचक्खुओहिदंसणावरणरूवाओ सतरसपयडीओ इगदुतिचउट्ठाणिअरसाओ, सेसाओ सुहाओ असुहाओ अ दुतिचउट्ठाणिअरसाओ निद्दिट्ठाओ ॥ संकिलेसेणं असुहाणं पयडीणं तिव्वे रसे भवइ, विसोहीए मंदे । सुहाणं पुण विसोहीए तिव्वे, संकिलेसेणं मंदेत्ति ॥ पएसा कम्मवग्गणादलिअसरूवा ॥ इह खलु जीवे निअसव्वपएसेहिं अभव्वाणंतगुणपएसनिप्फन्ने सव्वजीवाणंतगुणरसच्छेओववेए एगपएसोगाढे अभव्वाणंतगुणे कम्मवग्गणाखंधे पइसमयं गिण्हेइ ॥ गिण्हित्ता तम्मज्झाओ थोवं दलिअं आउस्स, तओ विसेसाहिअं परोप्परं तुल्लं नामगोत्ताणं, तओ विसेसाहिअं परोप्परं तुल्लं नाणावरणदंसणावरणंतरायाणं, तओ विसेसाहियं मोहस्स, तओ विसेसाहिअं वेअणीअस्स विभएत्ता निअपएसेसु खीरनीरनाएणं अग्गिलोहपिंडनाएणं वा संबंधेइ ॥ एसा कम्मदलिअस्स अट्ठभागकप्पणा अट्ठविहबंधगेसु । सत्तविहाइबंधगेसु सत्तभागाइकप्पणा कायव्वा ॥ पयडिपएसबंधाणं जोगा हेऊ । ठिइअणुभागबंधाणं कसाया ॥ पुट्ठ १ बद्ध २ निधत्त ३ निकाइअ ४ भेअभिंसे वा चउविहे बंधे ॥

॥ इइ बंधतत्तनिरूवणो नाम समयसारस्स चउत्थो अज्झाओ ॥ ४ ॥

---

आसवाणं निरोहे संवरे पण्णत्ते ॥ से अ समिइगुत्तिपरीसहजइधम्मभावणाचरित्तेहिं कम्मपुग्गलादाणसंवरणाओ सत्तावन्नविहे भवइ ॥ तत्थ इरिआईओ समिईओ पंच ॥ जोगनिग्गहरूवाओ गुत्तीओ तिण्णि॥

खुहाइआ परीसहा बावीसं ॥ खंतिप्पमुहे दसविहे जइधम्मे ॥ अणिच्चयाइआओ दुवालस भावणाओ ॥ सामाइआइं पंच चारित्ताइं ॥

॥ इइ संवरतत्तनिरूवणो नाम समयसारस्स पंचमो अज्झाओ ॥ ५ ॥

अणुभूअरसाणं कम्मपुग्गलाणं परिसडणं निज्जरा ॥ सा दुविहा पण्णत्ता, सकामा अकामा य ॥ तत्थ अकामा सव्वजीवाणं ॥ तहाहि—एगिंदिआइआ तिरिआ जहासंभवं छेअभेअसीउण्हवासजलग्गिछुहापिवासाकससंकुसाईहिं, नारगा तिविहाए वेअणाए, मणुआ छुहापिवासायाहिदालिद्दचारगनिरोहाइणा, देवा पराभिओगकिव्विसिअत्ताइणा असायवेअणीअं कम्ममणुभविउं परिसाडिंति त्ति तेसिं अकामनिज्जरा ॥ सकामनिज्जरा पुण निज्जराहिलासीणं अणसण १ ओमोअरिआ २ भिक्खायरिआ ३ रसचाय ४ कायकिलेस ५ पडिसंलीणया ६ भेअं छव्विहं बाहिरं, पायच्छित्त १ विणय २ वेआवच्च ३ सज्झाय ४ झाण ५-विउस्सग्ग ६ भेअं छव्विहमब्भंतरं च तवं तवंताणं ॥

॥ इइ निज्जरातत्तनिरूवणो नाम समयसारस्स छट्ठो अज्झाओ ॥ ६ ॥

घाइचउक्खवणं उप्पन्नकेवलनाणदंसणस्स कसिणकम्मक्खए मोक्खे पण्णत्ते ॥ खीणकम्माणो अ गउरवाभायाओ नाहो गच्छंति ॥ जोगपओगाभायाओ न तिरिअं गच्छंति ॥ निस्संगत्ताओ गयलेवालाउफलं व

धम्मत्थदाओ तदेगसमं च पुव्वपओगाओ धणुविमुक्कउसु व्व तहागइपरिणामाओ धूम व्व उड्ढं गच्छंति ॥ लोगंत अ चिट्ठंति ॥ धम्मत्थिकायाभावेणं न परओ गई ॥ तत्थ य सासयं निरुवमं सहावजं सुक्खं अणुहवंति ॥ सुरासुरनराणं सव्वद्धापिंडिआइं सोक्खाइं जस्साणंतभागो न भवंति ॥ ते अ सिद्धा संतपयपरूवणाईहिं नवहिं अणुओगदारेहिं परूविअव्वा ॥

॥ इइ मोक्खतत्तनिरूवणो नाम समयसारस्स सत्तमो अज्झाओ ॥ ७ ॥

एआणि सत्त तत्ताणि बंधंतब्भूआणं पुण्णपावाणं विभिन्नत्तविवक्खाए नवावि भण्णंति ॥ संखेवेणं विभंतण वा तेसिं अवबोहे सम्मत्ताणं ॥ तं च आभिणिबोहिअ १ सुअ २ ओहि ३ मणपज्जव ४ केवलनाण ५—भेएहिं पंचहा नायव्वं ॥ तेसिं चिअ तत्ताणं सद्दहणं सम्मद्दंसणं नाणस्स हेऊ ॥ तं च कस्सइ कम्मोवसमाईहिं गुरूवएसाइनिरवेक्खसहावेणं निसग्गेणं उप्पज्जइ। कस्सइ कम्मोवसमाइसब्भावे गुरूवएसजिणपडिमादंसणाइबाहिरउवट्ठंभसवेणं अहिगमेणं ॥ तस्स य सम्मद्दंसणस्स तिण्णि भेआ पण्णत्ता, तंजहा—उवसमिअं १ खओवसमिअं २ खइअं ३ च ॥ तत्थ उवसमिअं उवसमसेढीए अणंताणुबंधिकसायाणं मिच्छत्तमीससम्मत्तरूवस्स दंसणतिगस्स य उवसमे भवइ ॥ ॥ १ ॥ अहवा जे अणाइमिच्छदिट्ठी जीवे अहापवत्तकरणेणं आउसवज्जाणि सत्तण्हं पलिओवमासंखिज्जभागहीणसागरोवमकोडाकोडिठिइआणि सत्त कम्माइं काउं अपुव्वकरणेण विभिन्नदुब्भेअगंठी अनिअट्टिकरणेणं अंतोमुहुत्तकालमाणं पढमठिइमिच्छत्तमोहणीअदलि-

आभोगरूवं अंतरकरणं करेइ, तम्मि अकए मिच्छत्तमोहणीअस्स ठिइदुगं हवइ—पढमा वेइज्जमाणा ठिई अंतोमुहुत्तपमाणा, बीआ अंतरकरणाओ उवरिं सेसा ठिइ त्ति। अंतोमुहुत्तेण य पढमठिईए वेइआए अंतरकरणस्स पढमे चिअ समए मिच्छत्तदलिओदयाऽभावाओ तस्स जीवस्स उवसमिअं सम्मत्तं संपज्जइ। उव्वलिअसम्मत्तमीसपुंजस्स वा मिच्छदिट्ठिस्स॥ एवं च लद्धेणं उवसमिअसम्मत्तेणं ओसहविसेसकप्पेणं मयणकोद्दवरूवं मिच्छत्तमोहणीअं विसोहिज्जमाणं तिहा भवइ, तंजहा—सुद्धं १ अद्धविसुद्धं २ अविसुद्धं ३ च। एए अ सुद्धाइआ पुंजा तत्तसद्दहणउदासीणत्तविवरीअसद्दहणजणणाओ जहाकमं सम्मत्त १ मीस- २ मिच्छत्त ३ रूवा भण्णंति। जया णं सुद्धे पुंजे उदेइ तया खओवसमिअं सम्मत्तं भण्णइ॥ उइण्णस्स मिच्छत्तस्स खयाओ अणुइण्णस्स उवसमाओ॥ इहं च मिच्छत्तमीसपुंजे सुद्धपुंजं च पडुच्च विक्खंभिओदयत्तं अपणीयमिच्छत्तसहावत्तं च उवसमे दट्ठव्वे॥ खइअं पुण खीणाणंताणुबंधिकसायस्स पुंजतिगे खीणे हवइ॥ खाइअस्स आरंभगा संखिज्जवासाउआ मणुआ चिअ नायव्वा॥ एअं च तिविहंपि सम्मत्तं वेमाणिएसु आइमनरयपुढवीतिगे संखिज्जासंखिज्जाउमणुएसुं असंखिज्जाउतिरिएसुं च लब्भइ॥ सेसदेवनारएसुं संखिज्जाउमणुयपंचिंदियतिरिएसुं च उवसमिअखओवसमिआइं॥ एगबितिचउरिंदिआणं असन्निपंचिंदिआणं च एएसिं तिण्हं मज्झाओ एगंपि नत्थि॥

॥ इइ सम्मत्तदंसणरूवगो नाम समयसारस्स अट्ठमो अज्झाओ॥ ८॥

सावज्जजोगविरई सम्मंचारित्तं पण्णत्तं ॥ तं च दुविहं, तंजहा—सव्वओ देसओ अ ॥ तत्थ सव्वओ भरहेरावयपढमंतिमतित्थयराणं पंच महव्वयाइं । मज्झिमतित्थयराणं महाविदेहतित्थयराणं च परिग्गहविरईए मेहुणविरई सिद्ध त्ति चत्तारि ॥ तस्स य चरणस्स पंच समिईओ तिण्णि गुत्तीओ मायाओ ॥ एआहिंतो चरणस्स जणणपालणविसोहणभावाओ ॥ भेआ पुण सामाइअ १ छेओवट्ठावण २ परिहारविसुद्धिअ ३ सुहुमसंपराय ४ अहक्खाय ५ नामाणो पंच दट्ठव्वा ॥ दुइअतइआ भेआ भरहेरावयपढमंतिमतित्थयरतित्थेसु चिअ भवंति ॥ एअं सव्वचरणं अणगारीणं ॥ एअंमि असमत्थाणं अगारीणं देसचरणं ॥ तत्थ य पंच अणुव्वयाणि । तिण्णि गुणव्वयाणि । चत्तारि सिक्खावयाणि । सव्वग्गेणं दुवालस वयाणि ॥ दुविहतिविह १—दुविहदुविह २ दुविहएगविह ३ एगविहतिविह ४ एगविहदुविह ५ एगविहएगविह ६ लक्खणा एक्केक्कवए छब्भंगा । दुगतिगाइसंजोगे पत्तेय अयरायरयपढमभंगसंवेहेणं जहुत्तरं छग्गुणा ॥ उद्धुद्धं पगुत्तरएगाई ठविअ उवरि उवरि च्चिय । पुण पुण अंतेकरयं, मुंचंतो हुंति संजोगा ॥ १ ॥ इअगाहाभणिअकरणलद्धाए वयाणं एक्कगदुगाइसंजोगसंखाए गुणिएसु अ तेसु देसचरणस्स भंगसंखा हवइ ॥ एएसिं भंगाणं पडियद्धुत्तरगुणअविरयसम्मद्दिट्ठिलक्खणभंगदुगसहिआणं संखागाहा, जहा—तेरहकोडिसयाइं, चउरासी कोडि बारस य लक्खा । सत्तासीइसहस्सा, दुन्नि सया दोन्नि अब्भहिआ ॥ १ ॥ १३८४१२८७२०२ ॥ सम्मत्तालाभकम्मट्ठिईए पलिओपमपुहत्ते खविए देसचरणं लहंति । तओऽवि संखिज्जसागरेसु खविएसुं सव्वचरणं ॥

॥ इइ सम्मंचरणपरूवणो नाम समयसारस्स नवमो अज्झाओ ॥ ९ ॥

मरगयपउमरागाइलोगपसिद्धरयणेहिंतो विसिट्ठगुणं एअं रयणत्तिगं हुवइ ॥ एएसिं तिण्हंपि परोप्परा-विरहयाए मोक्खलक्खणं फलं साहिज्जइ, न निरविक्खयाए ॥ नाणचरणजुत्तोऽवि दंसणरहिए अंगारमद्दए अभव्वे सि हुज्जइ, नाणदंसणजुत्तावि चरणरहिआ कण्हसेणिअसच्चइपमुहा अहरगइं पत्ता । तम्हा तिण्हंपि संजोगे मल्लाहिज्जइ ॥ परमरिसिभासिअं जहा—"हयं नाणं किआहीणं, हया अण्णाणओ किआ । पासंतो पंगुलो दड्ढो, धावमाणो अ अंधओ ॥ १ ॥ संजोगसिद्धीइ फलं वयंति, न हु एगचक्केण रहो पयाइ । अंधो अ पंगू अ वणे समेच्चा, ते संपउत्ता नयरं पविट्ठा ॥ २ ॥"एअं रयणत्तिगं उक्कोसाए आराहणाए आराहित्ता तेणेव भवग्गहणेणं मज्झिमाए तीहिं जहन्नाए अट्ठहिं भवग्गहणेहिं सिज्झंति, बुज्झंति, मुच्चंति, परिनिव्वाइंति, सव्वदुक्खाणमंतं करिंति ॥ विराहित्ता चाउरंतं संसारकंतारं अणुपरिअट्टंति ॥ तम्हा अणंतसुहफलकंखीहिं एअस्स आराहणाए चिअ उज्जमेअव्वंति एसो अट्ठो परमट्ठो ॥ जा तित्थेसरसासणे कुसलया नाणंति तं वुच्चए, जा तस्सेव रुई अईव विमला सद्दंसणं तं पुणो । चारित्तं तु हविज्ज तं विरमणं सावज्जजोगेहिं जं, एअं मो । रयणत्तिगं सिवफलं गिण्हेह सव्वे अणा ॥ १ ॥ समयस्स सारमेअं, अप्पपराणुग्गहाय संगहिअं । जाणइ मणइ पालइ, जो तस्स करट्ठिया सिद्धी ॥ २ ॥ लोआण देवचंद व्व हिया पउमप्पहा जिणेसपया । देयाणंदमसुहहेऊ सययं सिवं दिंतु ॥ ३ ॥

॥ इअ आराहणाविराहणाफलनिरूवणो नाम समयसारस्स दसमो अज्झाओ ॥ १० ॥

